# पूर्वप्रकाशित ग्रन्थ।

**१ लघीयस्त्रयादिसंग्रह**—इसमें भट्टाकलंकदेवकृत लघीयस्त्रय सटीक, आचार्य अनन्तकीर्तिकृत लघु सर्वज्ञसिद्धि और बृहत्सर्वज्ञसिद्धि, तथा अकलंकदेवकृत स्वरूपसम्बोधन इन चार ग्रन्थोंका संग्रह प्रकाशित हुआ है। मूल्य ।=)

**२ सागारधर्मामृत सटीक**—पण्डित प्रवर आशाधरका यह प्रसिद्ध ग्रन्थ उनकी भव्यकुमुदचन्द्रिका नामकी संस्कृत टीका सहित छपा है। मूल्य ।≡)

**३ विक्रांतकौरव नाटक**—कवि श्रीहस्तिमल्लकृत। जयकुमार और सुलोचनाकी कथापर यह सुन्दर नाटक रचा गया है। मू० ।=)

## प्रकाशित होनेवाले ग्रन्थ।

**५ मैथिलीकल्याण नाटक**—कवि श्रीहस्तिमल्लकृत। मू० ०≡)

६ आशाधरकृत **प्रतिष्ठाकल्प,** ७ देवसेन सूरिकृत **नयचक्र,**

**८ अंजनापवनंजय नाटक**—आदि और कई ग्रन्थोंके छपानेका भी प्रयत्न हो रहा है।

**नोट**—ग्रन्थमालाके सब ग्रन्थ बम्बईके सब जैन बुकसेलरोंके पास शोलापुर जैन बुकडिपोमें और दिगम्बर जैन पुस्तकालय सूरतमें मिल सकेंगे।

निवेदक—

**नाथूराम प्रेमी,** मंत्री

हीराबाग बंबई।

# प्रार्थनायें ।

१ इस ग्रन्थमालाका प्रत्येक ग्रन्थ लागतकी कीमतपर बेचा जाता है । ग्रन्थोंका उद्धार और प्रचार करना ही इसका उद्देश्य है । अतः प्रत्येक धर्मात्माको इसकी सहायता करना चाहिए और अपने मित्रोंसे कराना चाहिए ।

२ ग्रन्थमालाके लिए जो फण्ड हुआ है यह बहुत ही थोड़ा अर्थात् लगभग चार हज़ार रुपया है; पर यह काम इतना बड़ा है कि इसके लिए कमसे कम ५० हज़ारका फण्ड ज़रूर होना चाहिए। इसलिए इसके फण्डकी रकम बढ़ानेकी ओर प्रत्येक धनीका लक्ष्य रहना चाहिए।

३ धर्मात्माओंको इसके प्रत्येक ग्रन्थकी कमसे कम २५ प्रतियोंके स्थायी ग्राहक बन जाना चाहिए । यदि पच्चीस पच्चीस प्रतियाँ लेनेवाले सिर्फ २० और दश दश प्रतियाँ लेनेवाले सिर्फ ५० ही ग्राहक इसके बन जायँ, तो इसके द्वारा सैकड़ों ग्रन्थोंका उद्धार सहज ही हो सकता है । ग्रन्थोंकी कीमत बहुतही कम होती है, इस कारण उनकी दश पच्चीस प्रतियाँ खरीद लेना साधारण गृहस्थोंके लिए भी कुछ कठिन नहीं है ।

४ कमसे कम २५० प्रतियाँ खरीदनेवालोंका फोटो और स्मरणपत्र इसके ग्रन्थोंमें लगाया जा सकता है, अतः इस ओर भी धनियोंको ध्यान देना चाहिए । ऐसा करनेसे धर्म और कीर्ति दोनोंकी साधना हो सकती है ।

५ व्याह शादी, जन्मोत्सव, प्रतिष्ठा, आदि प्रत्येक आनन्द कार्योंमें दान करते समय प्रत्येक जैनीको इस संस्थाका स्मरण रखना चाहिए और शक्तिके अनुसार जितनी बन सके उतनी सहायता इसकी करना चाहिए।

प्रार्थी—

हीराबाग पोष्ट, गिरगाँव—बम्बई ] नाथूराम, प्रेमी—मंत्री।

# माणिकचन्द दिगम्बर-जैनग्रन्थमालाकी नियमावली।

१–इस ग्रन्थमालामें केवल दिगम्बर जैन सम्प्रदायके संस्कृत और प्राकृतिक भाषाके प्राचीन ग्रन्थ प्रकाशित होंगे। यदि कमेटी उचित समझेगी तो कभी कोई देशभाषाका महत्त्वपूर्ण ग्रन्थ भी प्रकाशित कर सकेगी।

२–इसमें जितने ग्रन्थ प्रकाशित होंगे उनका मूल्य लागत मात्र रक्खा जायगा। लागतमें ग्रन्थ सम्पादन कराई, संशोधन कराई, छपाई, बँधाई आदिके सिवाय आफिस खर्च, व्याज और कमीशन भी शामिल समझा जायगा।

३–यदि कोई धर्मात्मा किसी ग्रन्थकी तैयार कराईमें जो खर्च पड़ा है वह, अथवा उसका तीन चतुर्थांश, सहायतामें देंगे तो उनके नामका स्मरणपत्र और यदि वे चाहेंगे तो उनका फोटू भी उस ग्रन्थकी तमाम प्रतियोंमें लगा दिया जायगा। जो महात्मा इससे कम सहायता करेंगे उनका भी नाम आदि यथायोग्य छपवा दिया जायगा।

४–यदि सहायता करनेवाले महाशय चाहेंगे तो उनकी इच्छानुसार कुछ प्रतियाँ जिनकी संख्या सहायताके मूल्यसे अधिक न होगी मुफ्तमें वितरण करनेके लिए दे दी जायँगीं।

५–इसमें ग्रन्थमालाकी कमेटी द्वारा चुने हुए ग्रन्थ ही प्रकाशित होंगे।

पत्रव्यवहार करनेका पता–

**नाथूराम प्रेमी,**

हीराबाग, पो. गिरगांव, बम्बई।

## माणिकचन्द-
## दिगम्बरजैनग्रन्थमालासमिति।

(प्रबन्धकारिणी सभाके सभ्य)

—

# श्रीवादिराजसूरिः।

संति जैनेष्वेतादृशाः स्वल्पा ये: सुविख्यातस्यैकीभावस्तोत्रस्य कर्तुर्नाम नाकर्णितं स्यात्। परंतु ईदृशा जना द्वित्रा एव दुःसाध्या यैरिदं ज्ञातं स्याद्यत्कोयं वादिराजः, कदा बभूव, तस्य काभिः काभी रचनाभिः जैन-संप्रदाय उपकृतीबभूव। वयं पाठकानामग्रे अनेन लेखेनाद्यास्यैव महानुभावस्य किंचित्परिचयं दित्सामः।

वादिराजसूरिर्नन्दिसंघस्याचार्य आसीत्। तस्य परंपरायाः(अन्वयस्य) अरुंगलेति नाम आसीत्।[1] परमयं नंदिसंघः स च नास्ति यस्य गणना चतुः संघानां मध्ये कृता भवति, किंतु द्रमिलस्य द्राविडस्य वा संघस्यैको गच्छो भेदो वास्ति। पाठकानां विदितं स्यात् यदस्य द्रविडसंघस्य स्थापकः पूज्यपादस्वामिनः शिष्यो वज्रनंदी अस्ति। अस्य गणना पंचजैनाभासेषु कृतास्ति।[2] द्रविडदेशे भवत्वादेवास्य नाम द्राविडसंघः प्रथितः। स दाक्षिणात्येति संभाव्यते। षट्तर्कषण्मुख–स्याद्वादविद्यापति–जगदेकमल्लवादी इत्याद्यनेकशः पदव्यस्तस्यासीत्।[3] स सिंहपुरैकमुख्यत्रैविद्यविद्येश्वरश्रीपाल-

---

१. श्रीमद्द्रमिलसंघेस्मिन्नंदिसंघेस्त्यरुङ्गलः।
अन्वयो भाति योऽशेषशास्त्रवारानिधिपारगः॥

२. गोपुच्छकः श्वेतवासो द्रविडो यापनीयकः।
निःपिच्छिकश्चेति पंचैते जैनाभासाः प्रकीर्तिताः॥—नीतिसारः।

३. षट्तर्कषण्मुखरं स्याद्वादविद्यापतिगळं जगदेकमल्लवादीगळु एनिसिद्श्रीवादिराजदेवरम्।

देवस्य प्रशिष्यो मतिसागरमुनेः शिष्यः प्रख्यातरूपसिद्धिग्रंथकर्तुर्दयापालमुनेः सतीर्थ आसीत्।

९४७ शकाब्दानुमानेन तस्यास्तित्वं प्रतीयते यदा तेन पार्श्वनाथचरितस्य रचना कृतासीत्। पार्श्वनाथचरितस्य निम्नलिखितप्रशस्तितः सर्वमिदं वृत्तमनुमीयते—

श्रीजैनसारस्वतपुण्यतीर्थनित्यावगाहामलबुद्धिसत्त्वैः।
प्रसिद्धभागी मुनिपुङ्गवेन्द्रैः श्रीनंदिसंघोस्ति निवर्हितांहाः॥१॥
तस्मिन्नभूदद्भुतसंयमश्रीस्त्रैविद्यविद्याधरगीतकीर्तिः।
सूरिः स्वयं सिंहपुरैकमुख्यः श्रीपालदेवो नयवर्त्मशाली॥२॥
तस्याभवद्भव्यमहोत्पलानां तमोपहो नित्यमहोदयश्रीः।
निषेधदुर्मार्गनयप्रभावः शिष्योत्तमः श्रीमतिसागराख्यः॥३॥
तत्पादपद्मभ्रमरेण भूम्ना निःश्रेयसश्रीरतिलोलुपेन।
श्रीवादिराजेन कथा निवद्धा जैनी स्वबुद्ध्येयमनिर्दयापि॥४॥
शाकाब्दे नगवार्धिरन्ध्रगणने संवत्सरे क्रोधने
मासे कार्तिकनाम्नि बुद्धिमहिते शुद्धे तृतीयादिने।
सिंहे पाति जयादिके वसुमतीं जैनी कथेयं मया
निष्पत्तिं गमिता सती भवतु वः कल्याणनिष्पत्तये॥५॥

---

१ हितैषिणो यस्य नृणामुदात्तवाचा निवद्धा हितरूपसिद्धिः।
वंद्यो दयापालमुनिः स वाचा सिद्धः सतां मूर्धनि यः प्रभावैः॥
इदं रूपसिद्धिव्याकरणं मैसूराख्यपत्तनस्य 'ओरियंटला'ख्यपुस्तकालये वर्तते।

२ यस्य श्रीमतिसागरो गुरुरसौ चंचद्यशश्चंद्रभूः
श्रीमान्यस्य स वादिराजगणभृत्सब्रह्मचारी विभोः।
एकोतीव कृती स एव हि दयापालव्रती यन्मन—
स्यास्तामन्यपरिग्रहग्रहकथा स्वे विग्रहे विग्रहः॥४॥
(मल्लिषेणप्रशस्तिः)

लक्ष्मीवासे वसति कटके कट्टगातीरभूमौ
कामावाप्तिप्रमदसुलभे सिंहचक्रेश्वरस्य।
निष्पन्नोऽयं नवरससुधास्यंदसिंधुप्रबंधो
जीयादुच्चैर्जिनपतिभवप्रक्रमैकांतपुण्यः ॥ ६ ॥

पूर्वीयपद्यद्वयेनेत्यपि प्रतीयते यत्पार्श्वनाथचरितस्य रचना चालुक्य-जयसिंहमहाराजस्य शासनसमये तदीयराजधान्यां बभूव। रमणीयेयं राजधानी कट्टगाख्यनदीतटे अस्ति। कदाचित्तस्य सिंहपुरेति नाम आसीत्[1]

ऐतिह्यपर्यवेक्षणेन ज्ञायतेऽयं जयसिंहमहाराजश्चौलुक्यवंशोद्भवः पृथिवीवल्लभ—महाराजाधिराज—परमेश्वर चालुक्यचक्रेश्वर-परमभट्टारक—जगदेकमल्लेत्याद्युपाधयस्तस्यासन्। अस्य वंशे जयसिंहनामापरो राजा बभूव, अत एवैनं द्वितीयं जयसिंहं वदंति। अस्य राज्यसमयसंबंधिनः त्रिंशतोप्यधिकाः शिलालेखास्ताम्रपत्राणि चोपलभ्यंते, परं तेभ्य इदं वृत्तं नावगम्यते यदस्य राज्याभिषेकः कदा बभूव। उपर्युक्तलेखेषु प्रथमो लेखः ९३८ शकाब्दीयः अंतिमश्च ९६४ शकाब्दीयोस्ति, यत एतावत्तु निर्विवादं सिद्ध्यति यत्तेन स्वल्पतरं ९३८ शकाब्दात् ९६४ शकाब्दपर्यंतं शासनमनुष्ठितं। तदनंतरं तदीयपुत्रः सोमेश्वराख्य आहवमल्लस्तद्राज्याधीशो बभूव।

अयं नृपो महाशूरः प्रतापी चास्ति। तस्यैकस्मिन् लेखे 'यत् ९४५ शकाब्दस्य पौषकृष्णद्वितीयाया अस्ति' लिखितमास्ते यद् भोजरूपपद्माय

१ इयं कट्टगानदी क्वास्ति जयसिंहस्य राजधानी सिंहपुरश्च कुत्रास्तीति न ज्ञायते। जयसिंहपुत्रेण प्रथमेन सोमेश्वरेण तु स्वीयराजधानी वर्तमान-निजाम-राज्यांतर्गतकल्याणनगरे स्थापिता। २ केषांचिद्विदुषामत्र विषये संदेहो यज्जयसिंहेन भोजः पराजितः।

चन्द्रसदृशेन राजेन्द्रचोल (परकेसरीवर्मा) हस्तिने च सिंहनिभेन राजाधिराजेन जयसिंहेन मालवीयसम्मिलितसैन्यं पराजितं चेर–चोलस्था दंडिताश्च।

अग्रे यन्मल्लिषेणप्रशस्तेः किंचिदंशः समुद्धृतः, तस्य तृतीयपद्ये यद् जयसिंहराजधान्याः 'वाग्वधूजन्मभूमौ' इति विशेषणं दत्तं, द्वितीयपद्ये वादिराजः 'सिंहसमर्च्यपीठविभवः' इत्यनेन विशेषितः। अनेन ज्ञायते जयसिंहमहाराजस्य राजधान्यां विद्याविनोदो बह्वासीत्। महतां वादिनां कवीनां नैयायिकानां च विदुषां तत्र निवास आसीत्। जयसिंहो महाराजश्च वादिराजसूरेर्भक्तस्तस्य सेवापरायणश्च बभूव। यद्यपीदृक्प्रमाणं नोपलब्धं यज्जयसिंहनरेशो जैनो वा जैनधर्मे श्रद्धालुः तथापीदं नूनं कथ्यते यत्तस्य जैनधर्मे जैनधर्मानुयायिषु च कृपा स्यात्। तत्रेदमेव कारणं ज्ञायते यत्तस्य वादिराजसूरिषु भक्तिरासात्।

जैनकथाग्रन्थेष्वेका कथा प्रसिद्धास्ति तस्याश्च एकीभावस्तोत्रस्य संस्कृते-टीकायां केषुचिद् ग्रंथांतरेषु च उल्लेख उपलभ्यते यद्वादिराजसूरेः कस्मिंश्चित्समये कुष्ठरोग उत्पन्नो बभूव। महाराजजयसिंहस्य सभाया यदा एतद्वृत्तस्य प्रस्तावोऽभूत् तदा तत्रासीनेन केनचिच्छ्रावकेण वादिराजभक्तेन पृष्टे सति गुरुनिंदाभिया दमुक्तं मम गुरुः कुष्ठी नास्ति। अस्मिन् विषये विवादो जातः, अवसाने इति निर्धारितं यन्महाराजः श्व आगत्य वादिराजं द्रष्टा। श्रावकमहाशयेन पूर्वमविचार्य कथितं पश्चात्तु महतीचिंतायां पतितं तेन कमप्युपायमनिरीक्ष्य गुरोः संनिधिं गत्वा स्वकीयापराधो निवेदितः, कथितं चेदानीं प्रतिज्ञानिर्वाहो भवदधीनः। वदंति च जनाः तस्मिन्नेव समये वादि-

१ पद्य तु काव्यमालासप्तमगुच्छके द्वादशपृष्ठस्य टिप्पण्याम्। २ दृष्टव्यं वृंदावनविलासे ३१ पृष्ठस्य १४ पद्यं।

राजसूरिणा एकीभावस्तोत्रस्य रचना कृता तस्याश्च प्रभावेण तस्य कुष्ठरोगः पलायितः। एकीभावस्यायं चतुर्थः श्लोकः—

प्रागेवेह त्रिदिवभवनादेष्यता भव्यपुण्यात्
पृथ्वीचक्रं कनकमयतां देव निन्ये त्वयेदम्।
ध्यानद्वारं मम रुचिकरं स्वांतगेहं प्रविष्ट—
स्तत्किं चित्रं जिन वपुरिदं यत्सुवर्णीकरोषि ॥ ४ ॥

वादिराजसूरेरीदृक्प्रार्थनातोऽनुमीयते यदवश्यमेव तस्य शरीरे कश्चिद्विकार आसीत्। स तं निराकर्तुं स्पृहयांचभूव। स च विकारः पूर्वोक्तकथोक्तः कुष्ठरोगः स्यात्[1]।

परस्मिन् वासरे महाराजेन गत्वा वादिराजसूरेः दिव्यशरीरो दृष्टः। तच्छरीरे कस्याश्चिद्व्याधेः किमपि चिह्नं न दृष्टिपथं प्राप्तं। इति दृष्ट्वा तेन तत्पुरुषोपरि कोपदृष्टिः कृता येन सभायामेतद् वृत्तं प्रस्तुतं। मुनीश्वरः कोपपूरितेक्षणं राजानमवलोक्य तद्वयंग्यमवगम्य चेत्थमाह। राजन्, नायं प्रकृतजनो रोषविषयः। नानेन जनेन भवदग्रे मद्वृत्तं वितथमवादि। किंतु सत्यमेवाहं कुष्ठी प्रागासम्। तच्चिह्नमपि वर्ततेऽद्यावधि, यन्मम कनिष्ठिकायां कुष्ठरोगो वर्तते। तथैव सर्वशरीरे रोगोयं प्रागासीत्। केवलं धर्ममहिम्ना तदुपशमोऽधैव जातः। इत्येवमादि वृत्तमाकर्ण्य साश्चर्यलोचनो जातः स सम्राट्। तत एव च स राजा समधिकभक्तिं मुनिचरणयोर्विस्तारयामास। मल्लिषेणीयप्रशस्तौ 'सिंहसमर्च्यपीठविभवः' इति यदुक्तं ततो प्रकृतार्थ एव समर्थितो भवति। तादृक्प्रभावाभियुक्तस्य तस्य मुनेरादरो जयसिंहनरवरमनसि समुत्पादीति नालीकं विभाति, प्रकृतार्थपर्यालोचने सति।

१ एकीभावस्य तृतीयपंचमसप्तमश्लोकानामपि भाव एतेन समर्थितः।

कानिचित्पद्यानि श्रवणबेलगुलोपलब्ध—मल्लिषेणप्रशस्तिनाम्नि शिलालेखे तथा लभ्यन्ते यदर्थ विमर्षेण वादिराजसूरेर्वैदुष्यं सातिशयं स्वीकर्तुं प्रव्हाभवेन्मनः। तानि पद्यानीत्थं खलु—

"त्रैलोक्यदीपिका वाणी द्वाभ्यामेवोदगादिह ।
जिनराजत एकस्मादेकस्माद्वादिराजतः ॥ १ ॥
आरूढाम्बरमिन्दुबिम्बरचितौत्सुक्यं सदा यद्यश—
श्छत्रं वाक्चमरीजराजिरुचयोऽभ्यर्णं च यत्कर्णयोः ।
सेव्यः सिंहसमर्च्यपीठविभवः सर्वप्रवादिप्रजा—
दत्तोच्चैर्जयकारसारमहिमा श्रीवादिराजो विदाम् ॥ २॥

यदीयगुणगोचरोऽयं वचनविलासप्रसरः कवीनाम्:—

श्रीमच्चौलुक्यचक्रेश्वरजयकटके वाग्वधूजन्मभूमौ
निष्काण्डं डिण्डिमः पर्यटति पटुरटो वादिराजस्य जिष्णोः।
जह्युद्वाददर्पो जहिहि गमकता गर्वभूमा जहाहि
व्याहारेष्यों जहाहि स्फुटमधुमधुरश्रव्यकाव्यावलेपः ॥३॥
पाताले व्यालराजो वसति सुविदितं यस्य जिह्वासहस्रं
निर्गन्ता स्वर्गतोसौ न भवति धिषणो वज्रभृद्यस्य शिष्यः ।
जीवेतां तावदेतौ निलयबलवशाद्वादिनः केत्र नान्ये
गर्वं निर्मुच्य सर्वं जयिनमिनसभे वादिराजं नमन्ति ॥४॥
वाग्देवीसुचिरप्रयोगसुदृढप्रेमाणमप्यादरा—
दादत्ते मम पार्श्वतोयमधुना श्रीवादिराजो मुनिः।
भो भो पश्यत पश्यतैष यमिनां किं धर्म इत्युच्चकैः—
रब्रह्मण्यपराः पुरातनमुनेर्वाग्वृत्तयः पान्तु वः ॥ ५ ॥

सुस्पष्ट एवैतेषां पद्यानां वादिराजगुणकीर्तनपरो भावः । एकीभावनामस्तोत्रान्ते केनचिदुक्तमेकं पद्यं तदपि श्रीवादिराजगुणकीर्तनपरमेवास्ति । तद्यथा—

१ इयंप्रशस्तिः १०५० शकाब्दे लिखितास्ति ।

वादिराजमनु शाब्दिकलोको वादिराजमनु तार्किकसिंहः ।
वादिराजमनु काव्यकृतस्ते वादिराजमनु भव्यसहायः ॥

अर्थात् वैयाकरणास्तार्किकाः कवयः सुविदितभक्तिमहिमानो भव्याश्च लोके ये आसन् सन्ति च ते सर्वेपि वादिराजतो नाधिकाः किंतु हीना एव स्युः । अन्यच्चैकं पद्यं तत्प्रशंसापरं श्रूयताम्—

सदसि यदकलंकः कीर्तने धर्मकीर्ति—
र्वचसि सुरपुरोधा न्यायवादेऽक्षपादः ।
इति समयगुरूणामेकतः संगतानां
प्रतिनिधिरिव देवो राजते वादिराजः ॥

अर्थाद्बृहस्पतिधर्मकीर्त्यकलंकाक्षपादानां पृथक् पृथक् धर्मगुरूणामयं वादिराजः प्रतिनिधिभूत एव सर्वेषां किञ्चिति तत्तत्सर्वविशेषयुक्तत्वा-दनुमितं कविना ।

किमतः परं वादिराजः स्तूयेत ? एतावतैव स्तुतिः प्रभवति तस्य सर्वगुणसंपन्नतामाविर्भावयितुम् ।

एतत्पार्श्वनाथचरितस्यातिरिक्ताः १ एकीभावस्तोत्रं, २ यशोधरचरितं, ३ काकुत्स्थचरितं, ४ न्यायविनिश्चयविवरणं चेति वादिराजस्य पञ्च-कृतय उपलभ्यन्ते सद्यः । तत्र प्रथमं तावत्पंचविंशतिश्लोकमितं स्वल्प-परिमाणं स्तोत्रं वर्तते, तत्सर्वत्र प्रचारमागतमास्ते । स्वल्पत्वेऽप्यस्य सर्वाणि पद्यानि सरसानि सरलानि हृदयद्रावकाणि च नितरामाभान्ति ।

द्वितीयं तावद्यशोधरचरितमस्ति । तच्चतुःसर्गात्मकं षण्णवत्यधिक-शतद्वयपद्यपरिमाणं वर्तते । श्रीयशोधरनृपतेः कथामादाय वर्णितोऽयं काव्यग्रन्थः । एतत्काव्यं तंजोरनगरस्थ श्रीयुत टी. एस्. कुप्पुस्वामी शास्त्रिणाधुना प्रकाशितः । वादिराजस्य वाणी सर्वत्रैव सहृदया वर्तते ।

अस्माकमीदृश्यभिलाषा प्रादुर्बभूव यत्तदीयग्रंथानां कानिचित्पद्यान्यत्रोद्धृत्य पाठकानां विस्मयमुत्पादयामः परंतु स्थानाभावादेतादृशं नानुष्ठितं । अस्तु । अयं पार्श्वचरितस्तृतीयो ग्रंथः ।

चतुर्थस्य तत्कृतग्रन्थस्य काकुत्स्थचरितस्य यशोधरचरिते नाममात्रोल्लेखो दृश्यते । न सोऽपि बहु प्रयतितेपि दृष्टिपथमागतः । यशोधरचरिते यथा तन्नामोल्लेखः—

**श्रीपार्श्वनाथ-काकुत्स्थचरितं येन कीर्तितम् ।**
**तेन श्रीवादिराजेन दृब्धा याशोधरी कथा ॥**
( सर्ग १ श्लोक ५ )

पचम ग्रन्थस्तस्य सूरेः "**न्यायविनिश्चयविवरणम्**" इति । **तात्पर्यावद्योतिनी** व्याख्यानरत्नमालाख्यस्यैव नामान्तरमस्ति । भगवदकलंकदेवेन कृतस्य **न्यायविनिश्चय** नाम्नो न्यायग्रन्थस्य टीकात्मकोऽयं ग्रन्थः । स हि आरानगरान्तर्गतजैनसिद्धान्तभवननाम्नि पुस्तकालये वर्तते । एतदन्ते,

**"श्रीमत्सिंहमहीपतेः परिषदि प्रख्यातवादोन्नति—**
**स्तर्कन्यायतमोपहोदयगिरिः सारस्वतः श्रीनिधिः ।**
**शिष्यः श्रीमतिसागरस्य विदुषां पत्युस्तपःश्रीभृतां**
**भर्तुः सिंहपुरेश्वरो विजयते स्याद्वादविद्यापतिः ॥**

इत्याचार्यवर्यस्याद्वादविद्यापतिविरचितायां न्यायविनिश्चयतात्पर्यावद्योतिन्यां व्याख्यानरत्नमालायां तृतीयप्रस्तावः ।" इति लभ्यन्ते वाक्यानि ।

उपर्युल्लिखितेन पद्येन 'स्याद्वादविद्यापतिः' इति तदुपाविभूतं विशेषणं नितरां ख्यातिमागतं स्यात् । तत एवैतद्विशेषणमात्रमेव पद्येत्र कर्तृपरिचयार्थमुल्लिखितवान्सूरिः ।

'सिंहपुरेश्वर' इत्यपि विशेषणमेकं वर्तते उपरिगतग्रंथे अग्रे समुल्लिख्यमानायाः पार्श्वप्रशस्तेर्दर्शनेनापि एवमेव विशेषणं सूरेर्लभ्यते, तद्यथा, द्वितीयतच्छ्लोके सूरिगुरोस्तत्पूर्वजस्य च श्रीपालदेवस्य विषये 'सिंहपुरैकमुख्य' इति विशेषणेनोपश्लोकनं वर्तते। अतो ज्ञायते यत्कर्णाटदेशान्तर्गतं सिंहपुरं नाम स्थानं जयसिंहनरेशस्य राजधानी तदधीनमासीत्। तत्रैव चैतत्संघस्य पट्टः स्यादिति।

एतद्ग्रंथपंचकादृते मल्लिषेणप्रशस्तिमनुसृत्य 'त्रैलोक्यदीपिका वाणी' इत्यादि वचनोपलम्भात्तन्नामा ग्रन्थोपि तत्कृतः स्यादित्यनुमातुं न क्षतिः। एकस्मिन्ग्रन्थसूचीपुस्तके १ रुक्मिणियशोविजयः, २ वादमञ्जरी, ३, धर्मरत्नाकरोऽ ४ कलंकाष्टकटीका चेति ग्रन्थचतुष्टयं वादिराजकृतमित्युल्लेखो लब्धस्तथापि न निश्चेतुं पार्यते यदस्यैव किंवा स्युः, यतो बहवस्तन्नामानो विद्वांस आसन् पूर्वम्। न केवलमेकत्रैव कचिद्विषयेऽयं सूरिर्विद्वानासीत्किंतु विविधेषु विषयेषु। अतोन्येपि ग्रन्था एतत्सूरिकृताः कदाचिदासन् किंतु कालस्य विनाशनशीलस्य सर्वदा सत्त्वान्न ते ग्रन्था अद्योपलभ्यन्ते।

वादिराजसूरिणा पार्श्वनाथचरितं ९४७ तमे शाकाब्दे निर्मितमित्युक्तं पूर्वं किंचवशिष्टग्रन्थानां विषये न वक्तुं शक्यते प्रशस्त्यनुपलंभात् यत्कदा ते ग्रन्था अवतारमलभन्। यशोधरचरितं जयसिंहमहाराजराज्यसमये निर्मितं स्यादिति तु वक्तुं तावच्छक्यते। कुतः? तृतीयसर्गान्ते चतुर्थसर्गोपान्ते च जयसिंहनामभिव्येण नियोजितं यतः। तथा हि,

"व्यातन्वञ्जयसिंहतां रणमुखे दीर्घं दधौ धारिणीम्॥८५॥"
"रणमुखजयसिंहो राज्यलक्ष्मीं बभार॥७३॥"

इति सूरेर्जन्मस्थानदीक्षासमयादिकं प्रमाणाभावान्न निश्चेतुं शक्नुमो वयम्।

तत्समसमयेऽन्येपि कतिपयविद्वांस आसन्। तेषु मध्ये पण्डितपारिजातापरनामश्रीविजयभट्टारकनाम्नो विदुषः स्वयं सूरिणा स्वपद्ये एकस्मिन् स्तुतिरकारि। तद्यथा,—

यद्विद्यातपसोः प्रशस्तमुभयं श्रीहेमसेने मुनौ
प्रागासीत्सुचिराभियोगवलतो नीतं परामुन्नतिम्।
प्रायः श्रीविजये तदेतदखिलं तत्पीठिकायां स्थिते
संक्रान्तं कथमन्यथानतिचिराद्विद्येदृगीदृक् तपः॥

अयं श्रीविजयभट्टारको हेमसेनाचार्यस्य पदे स्थितवान्। मल्लिषेणप्रशस्तावप्येतत्प्रशंसायामुक्त एकः श्लोक उपलभ्यते। तद्यथा।

गङ्गावनीश्वरशिरोमणिवन्धसन्ध्या—
रागोल्लसच्चरणचारुनखेन्दुलक्ष्मीः।
श्रीशब्दपूर्वविजयान्तविनूतनामा
धीमानमानुषगुणोऽस्ततमः प्रमांशुः॥

एवमप्यतो पश्चादनुमीयते यत्तदानींतनः कश्चिद्गंगवंशीयो भूपः श्रीविजयभट्टारकस्य परमो भक्त आसीत्। प्रायोनेन हि राचमल्लेन रक्कसगंगराजेनैव वा भाव्यम्। नान्योयं श्रीविजयभक्तो भूपतिः कश्चिदित्यूह्यतेस्माभिः। रक्कसगङ्गराजो हि ९०६ तमशाकाब्दात् ९२१ शाकाब्दान्तं राज्यं बुभुजे, राजमल्लस्तस्य भ्रातैव। रक्कसानन्तरमेव राजमल्ल एव भूमिपालो जात इति प्रायो मतिर्मे।

गद्यचिन्तामणेः क्षत्रचूडामणेश्च कर्तुः श्रीवादीभसिंहस्य विद्यागुरुः

---

१ श्रीयुत टी. एस्. कुप्पूस्वामीशास्त्रिणा यशोधरचरितस्य भूमिकायां लिखितं यत् वादीभसिंहस्य वास्तविकं नाम अजितसेनमुनिरस्ति। वादीभसिंहेति तस्य विशेषणं पदवी वा बभूव। यथा मल्लिषेणप्रशस्तौ—

सकलभुवनपालानम्रमूर्धावबद्धस्फुरितमुकुटचूडालीढपादारविन्दः।
मदवदखिलवादीभेन्द्रकुंभप्रभेदी गणभृदजितसेनो भाति वादीभसिंहः॥

श्रीपुष्पसेननामासीत्। स पुष्पसेनोपि वादिराजसमसमये एव बभूव।

उभयभाषाकविचक्रवर्ती महाकविः श्रीमल्लिषेणोपि प्रायस्तदैव बभूव, यः ९६९ शकाब्दे महापुराणमेकं व्यरीरचत्।

दयापालमुनिः महाविद्वान् वादिराजसतीर्थ्य आसीत्। एतद्विषयेपि मल्लिषेणप्रशस्तौ कतिपयश्लोकाः सन्ति। किंतु विस्तरभयात्तेत्र नोद्रियन्ते।

सैद्धान्तिकचक्रवर्ती श्रीनेमिचन्द्राचार्यः, इन्द्रनन्दिः, कनकनन्दिः अभयनन्दिः, चन्द्रप्रभचरितकाव्यकर्त्ता वीरनन्दिः, कर्नाटकदेशीय–रत्न–अभिनवपम्पो नयसेन इत्येवमादयोपि प्रसिद्धतरा विद्वांसस्तदानीमेव स्तोकान्तरेणासन्नित्यनुमास्माकम्। एवं दशमी शकशताब्दी बहून् जैनान् विदुषः प्रादुश्चकार।

सूचना—जैनहितैषीसम्पादक-श्रीयुत नाथूरामप्रेमी दत्तेन हिन्दीभाषायां लिखितस्य 'विद्वद्रत्नमाला' नाम्नि पुस्तके प्रकाशितस्य च लेखस्यानुवादोऽयम्।

हीराबाग, बंबई नं. ४
वैशाखकृष्णा तृतीया
संवत् १९७२ वि०

निवेदकः—
**मनोहरलाल-शास्त्री.**

---

१. पुष्पसेनमुनिर्वादिराजसमकालीनोऽन्यो वादिराजसहनामधेयेन भिन्नो भवति स पूर्वानुमानैर्निर्णीतः।

तापसैर्वर्धिता यस्मिन् नित्योद्बोधपरश्वधे।
अछिद्यंत घनेऽतुच्छाः स्वयं दुस्तर्कशाखिनः ॥ ७ ॥
ज्ञानामृतार्णवे यत्र चित्ते मज्जति दुर्जये।
क्रोधदावाग्निसंतापो दानवेंद्राभ्यवर्तत ॥ ८ ॥
प्रहर्द्रानवमूर्धन्यमणिरागेण यद्वपुः।
प्रभावभ्रमिवाक्रांतं विद्युता श्यामलप्रभम् ॥ ९ ॥
निःशेषलोकवृत्तांतमीक्षमाणं यमीश्वरं।
उपास्थिषत गीर्वाणाः कामचारभयादिव ॥ १० ॥
अनंतगुणसाम्राज्यलक्ष्मीकांतमुपांतिमम्।
अवहंतारमर्हंतं वंदिषीय तमव्ययम् ॥ ११ ॥
अपि प्रहास्ये मांद्ये मे श्रेयस्कामितया प्रभोः।
कैवेयं चरितं तावदर्थी दोषं न पश्यति ॥ १२ ॥
जडाशयोदयमपि भव्यं तद्वचनं भवेत्।
यज्जिनाभिमुखं पद्ममभ्यर्के न तु शोभते ॥ १३ ॥
कुतस्तमो लयं याति वचोवातायनेन चेत् ॥
न विशेयुर्मनःसद्म सतां जिनगुणांशवः ॥ १४ ॥
अल्पसारापि मालेव स्फुरन्नायकसद्गुणा।
कंठभूषणतां याति कवीनां काव्यपद्धतिः ॥ १५ ॥

---

१ कपिलादिभिः। २ नित्योद्बोधः केवलज्ञानं तदेव परश्वधः परशुर्यस्य तस्मिन्। ३ दुस्तर्का दुष्टतर्का एव शाखिनो वृक्षाः। ४ नम्रीभूतकमठशिरोरत्नलौहित्येन। ५ नीलवर्णम्। ६ पूजयामासु। ७ कामस्य चारादाक्रमणाद् भयेन। ८ अंतिमतीर्थंकरस्य समीपवर्तिनं पार्श्वनाथमित्यर्थः। ९ मूर्खत्वे। १० कल्याणवांच्छया। ११ कथयामि। १२ जडाशयाद् मूर्खादुदयः प्रादुर्भावो यस्य तत्। पक्षे–डलयोरभेदात् जलाशयात्सरसः प्रादुर्भूतिरुत्पत्तिर्यस्य तत्। शीतगुणवज्जलादुत्पन्नमपि पद्ममुष्णगुणवत्सूर्याभिमुखं यथा शोभते तथा मूर्खोक्तं वचनमपि सर्वज्ञाभिमुखं शोभते। १३ वच एव वातायनं गवाक्षं तेन। १४ जिनेंद्रगुणा एव मरीचयः। १५ स्फुरंतः प्रकाशमाना नायकस्य चरित्रस्वामिनः, पक्षे–मालामध्यस्थितमणेर्गुणाः शौर्यक्षांत्यादयः पक्षे सौगंध्यादयो यस्यां सा।

अतुच्छगुणसंपातं गृद्धपिच्छं नतोऽस्मि तं ।
पक्षीकुर्वंति यं भव्या निर्वाणायोत्पतिष्णवः ॥ १६ ॥
स्वामिनश्चरितं तस्य कस्य नो विस्मयावहं ।
देवागमेन सर्वज्ञो येनाद्यापि प्रदर्श्यते ॥ १७ ॥
अचिंत्यमहिमा देवः सोऽभिवंद्यो हितैषिणा ।
शब्दाश्च येन सिद्ध्यंति साधुत्वं प्रतिलंभिताः ॥ १८ ॥
त्यागी स एव योगींद्रो येनाक्षय्यसुखावहः ।
अर्थिने भव्यसार्थाय दिष्टो रत्नकरंडकः ॥ १९ ॥
तर्कभूवल्लभो देवः स जयत्यकलंकधीः ।
जगद्द्रव्यमुषो येन दंडिताः शाक्यदस्यवः ॥ २० ॥
स्याद्वादगिरमाश्रित्य वादिसिंहस्य गर्जिते ।
दिग्नागस्य मदध्वंसे कीर्तिभंगो न दुर्घटः ॥ २१ ॥
नमः सन्मतये तस्मै भवकूपनिपातिनां ।
सन्मतिर्विवृता येन सुखधामप्रवेशिनी ॥ २२ ॥
जिनसेनमुनेस्तस्य माहात्म्यं केन कथ्यते ।
शलाकाः पुरुषाः सर्वे यद्वचोवशवर्तिनः ॥ २३ ॥
आत्मनैवाद्वितीयेन जीवसिद्धिं निबध्नता ।
अनंत[13]कीर्तिना मुक्तिरात्रिमार्गेव लक्ष्यते ॥ २४ ॥

---

१ उमास्वातिशिष्यं बलाकपिच्छापरनामकं इति श्रवणबेल्गुलस्थशिलालेखतः प्रतीयते । २ पक्षस्थाने कुर्वंति साहाय्येनाश्रयंतीत्यर्थः । ३ ऊर्ध्वमुत्पतितुं शीलं येषां ते । मोक्षं गंतार इत्यर्थः । ४ समंतभद्राचार्यस्य । ५ तत्त्वार्थसूत्रमहाभाष्यस्य मंगलाचरणरूपेणाप्तमीमांसानामकेन स्तोत्रेण । ६ समंतभद्रः । ७ रत्नकरंडश्रावकाचारः । ८ अकलंकदेवः । ९ शाक्या बौद्धा एव दस्यवश्चौराः । १० बौद्धाचार्य दिग्नागस्य । ११ सन्मतिविवरणनामकग्रंथकर्त्रे । १२ त्रिषष्टिशलाकाः पुरुषाः । प्राचीनमहापुरुषाणां जैनसाहित्ये शलाकापुरुषा इति संज्ञा । १३ जीवसिद्धिलघुबृहत्सर्वज्ञसिद्धिग्रंथत्रयस्य कर्ता ।

तापसै[1]र्वर्धिता यस्मिन् नित्योद्बोधपरश्वधे[2] ।
अछिद्यंत वनेऽतुच्छाः स्वयं दुस्तर्कशाखिनः[3] ॥ ७ ॥
ज्ञानामृतार्णवे यत्र चित्ते मज्जति दुर्जये ।
क्रोधदावाग्निसंतापो दानवेंद्रान्यवर्तत ॥ ८ ॥
प्रह्वद्दानवमूर्धन्यमणिरागेण[4] यद्वपुः ।
वभावभ्रमिवाक्रांतं विद्युता श्यामलं[5]प्रभम् ॥ ९ ॥
निःशेषलोकवृत्तांतमीक्षमाणं यमीश्वरं ।
उपास्थि[6]षत गीर्वाणाः कामचारभया[7]दिव ॥ १० ॥
अनंतगुणसाम्राज्यलक्ष्मीकांतमुपांतिमम्[8] ।
अघहंतारमर्हंतं वंदिषी[9]य तमव्ययम् ॥ ११ ॥
अपि प्रहास्ये मांद्ये मे श्रेयस्कामितया[10] प्रभोः ।
कैवेयं[11] चरितं तावदर्थी दोषं न पश्यति ॥ १२ ॥
जडाशयोदय[12]मपि भव्यं तद्वचनं भवेत् ।
यज्जिनाभिमुखं पद्ममभ्यर्कं न तु शोभते ॥ १३ ॥
कुतस्तमो लयं याति वचोवाता[13]यनेन चेत् ॥
न विशेयुर्मनःसद्म सतां जिनगुणांशवः[14] ॥ १४ ॥
अल्पसारापि मालेव स्फुरन्नायकसद्गुणा[15] ।
कंठभूषणतां याति कवीनां काव्यपद्धतिः ॥ १५ ॥

---

१ कपिलादिभिः । २ नित्योद्बोधः केवलज्ञानं तदेव परश्वधः परशुर्यस्य तस्मिन् । ३ दुस्तर्का दुष्टतर्का एव शाखिनो वृक्षाः । ४ नम्रीभूतकमठशिरोरत्नलौहित्येन । ५ नीलवर्णम् । ६ पूजयामासुः । ७ कामस्य चारादाक्रमणाद् भयेन । ८ अंतिमतीर्थंकरस्य समीपवर्तिनं पार्श्वनाथमित्यर्थः । ९ मूर्खत्वे । १० कल्याणवांछया । ११ कथयामि । १२ जडाशयाद् मूर्खादुदयः प्रादुर्भावो यस्य तत् । पक्षे–डलयोरभेदात् जलाशयात्सरसः प्रादुर्भूतिरुत्पत्तिर्यस्य तत् । शीतगुणवज्जलादुत्पन्नमपि पद्ममुष्णगुणवत्सूर्याभिमुखं यथा शोभते तथा मूर्खोक्तं वचनमपि सर्वज्ञाभिमुखं शोभते । १३ वच एव वातायनं गवाक्षं तेन । १४ जिनेंद्रगुणा एव [illegible]रीचयः । १५ स्फुरंतः प्रकाशमाना नायकस्य चरित्रस्वामिनः, पक्षे–मल्लामध्यस्थि[illegible]मणेर्गुणाः शौर्यक्षांत्यादयः पक्षे सौगंध्यादयो यस्यां सा ।



श्रीपरमात्मने नमः।

श्रीमद्वादिराजसूरिविरचितं

# श्रीपार्श्वनाथचरितम् ।

## प्रथमः सर्गः।



श्री[1]वधूनवसंभोगभव्यानंदकहेतवे ।
नमः श्रीपार्श्वनाथाय दानवेंद्रार्चिताङ्घ्रये ॥ १ ॥
क्रुद्ध[2]दैत्यविनिर्मुक्ताः सायका यस्य पादयोः ।
हिंसादोषक्षयायेव पुष्पवर्षश्रियं दधुः ॥ २ ॥
अग्निवर्षा कृपा यस्य पूर्व[3]देवेन निर्मितः ।
तपसा सहसा निन्ये हृद्यकुंकुमपंकताम् ॥ ३ ॥
गुरवोऽपि त्रिलोकस्य गुरोर्द्रोहादिवाद्रयः ।
लाघवं तूलवद् यस्य दानवप्रेरिता ययुः ॥ ४ ॥
भूगर्भादु[4]त्पतन्नागचूडामणिमरीचिभिः ।
आवृता यस्य धैर्येणेवाश्वरज्यत मेदिनी ॥ ५ ॥
आतपत्रं महाबोधेर्यस्य शुभ्रमिवांबुदं ।
प[5]द्मिनी विभरामास पर्वतस्येव मूर्धनि ॥ ६ ॥

---

१ श्रीरेव वधूस्तस्या नवसंभोगेन भव्यानामानंदस्य एको मुख्यो हेतुस्तस्मै । २ क्रुद्धः कुपितो यो दैत्यः कमठासुरस्तेन विनिर्मुक्तास्त्यक्ताः । ३ कमठेन पूर्वजन्मनो वैरिणा । ४ उत्पतत ऊर्ध्वमागच्छतो नागस्य धरणेंद्रस्य चूडामणिमरीचिभिः शिखामणिकिरणैः । ५ पद्मावती देवी ।

अतुच्छगुणसंपातं गृद्धपिच्छं नतोऽस्मि तं ।
पक्षीकुर्वंति यं भव्या निर्वाणायोत्पतिष्णवः ॥ १६ ॥
स्वामिनश्चरितं तस्य कस्य नो विस्मयावहं ।
देवागमेन सर्वज्ञो येनाद्यापि प्रदर्श्यते ॥ १७ ॥
अचिंत्यमहिमा देवः सोऽभिवंद्यो हितैषिणा ।
शब्दाश्च येन सिद्ध्यंति साधुत्वं प्रतिलंभिताः ॥ १८ ॥
त्यागी स एव योगींद्रो येनाक्षय्यसुखावहः ।
अर्थिने भव्यसार्थाय दिष्टो रत्नकरंडकः ॥ १९ ॥
तर्कभूवल्लभो देवः स जयत्यकलंकधीः ।
जगद्द्रव्यमुषो येन दंडिताः शाक्यदस्यवः ॥ २० ॥
स्याद्वादगिरमाश्रित्य वादिसिंहस्य गर्जिते ।
दिग्नागस्य मदध्वंसे कीर्तिभंगो न दुर्घटः ॥ २१ ॥
नमः सन्मतये तस्मै भवकूपनिपातिनां ।
सन्मतिर्विवृता येन सुखधामप्रवेशिनी ॥ २२ ॥
जिनसेनमुनेस्तस्य माहात्म्यं केन कथ्यते ।
शैलाकाः पुरुषाः सर्वे यद्वचोवशवर्तिनः ॥ २३ ॥
आत्मनैवाद्वितीयेन जीवसिद्धिं निबध्नता ।
अनंतकीर्तिना मुक्तिरात्रिमार्गेव लक्ष्यते ॥ २४ ॥

---

१ उमास्वामिशिष्यं बलाकपिच्छापरनामकं इति श्रवणबेल्गुलस्थशिलालेखतः प्रतीयते । २ पक्षस्थाने कुर्वंति साहाय्येनाश्रयंतीत्यर्थः । ३ ऊर्ध्वमुत्पतितुं शीलं येषां ते । मोक्षं गंतार इत्यर्थः । ४ समंतभद्राचार्यस्य । ५ तत्त्वार्थसूत्रमहाभाष्यस्य मंगलाचरणरूपेणाप्तमीमांसानामकेन स्तोत्रेण । ६ समंतभद्रः । ७ रत्नकरंडश्रावकाचारः । ८ अकलंकदेवः । ९ शाक्या बौद्धा एव दस्यवश्चौराः । १० बौद्धाचार्य दिग्नागस्य । ११ सन्मतिविवरणनामकग्रंथकर्त्रे । १२ त्रिषष्टिशलाकाः पुरुषाः । प्राचीनमहापुरुषाणां जैनसाहित्ये शलाकापुरुषा इति संज्ञा । १३ जीवसिद्धिरूपबृहद्ग्रंथस्य सिद्धिविनिश्चयवृत्तेः कर्ता ।

कुतस्त्या तस्य सा शक्तिः पाल्यकीर्तेर्महौजसः ।
श्रीपदश्रवणं यस्य शाब्दिकान् कुरुते जनान् ॥ २५ ॥
अनेकभेदसंधानाः खनंतो हृदये मुहुः ।
बाणा धनंजयोन्मुक्ताः कर्णस्येव प्रियाः कथम् ॥ २६ ॥
वंदेयानंतवीर्याब्दं यद्वागमृतवृष्टिभिः ।
जगज्जिघत्सन्निर्वाणः शून्यवादहुताशनः ॥ २७ ॥
ऋजुसूत्रं स्फुरद्रत्नं विद्यानंदस्य विस्मयः ।
शृण्वतामप्यलंकारं दीप्तिरंगेषु रंगति ॥ २८ ॥
विशेषवादिगीर्गुंफश्रवणाबद्धबुद्धयः ।
अक्लेशादधिगच्छंति विशेषाभ्युदयं बुधाः ॥ २९ ॥
चंद्रप्रभाभिसंबद्धा रसपुष्टा मनः प्रियं ।
कुमुद्वतीव नो धत्ते भारती वीरनंदिनः ॥ ३० ॥
कुशलानि विपश्यंतां यदि संति तथा मम ।
यावज्जीवं न पश्यामि दुर्जनं स च मां यथा ॥ ३१ ॥
अक्षमः सन् बुभुक्षार्य तरक्षुर्न तथा क्षणं ।
मां बिभीषयते यद्वदहेतुकुपितः खलः ॥ ३२ ॥
अथवाऽस्तु नमस्तस्मै दुर्जनायापि यद्भयात् ।
सप्रयत्नपदन्यासा न प्रमाद्यति मन्मतिः ॥ ३३ ॥
कलास्तत्र न वर्धंते चंद्रस्येव कवेरिव ।
कंठे विषग्रहो यस्य धूर्जटेरिव दुर्मतेः ॥ ३४ ॥

---

१ जैनशाकटायनव्याकरणकर्तुर्नाम कदाचित्पाल्यकीर्तिः स्यात् । २ शाब्दिकान् वैयाकरणान् । ३ बाणाः शब्दाः शराश्च । ४ अर्जुनस्तथामा द्विसंधानकाव्यकर्ता कविश्च । ५ श्रवणस्य कुंतिपुत्रस्य च । ६ प्रमेयरत्नमालानामकतर्कग्रंथकर्ता स एव मेघस्तम् ७ नष्टोऽभूत् । ८ श्लोकवार्तिकालङ्कारम् । ९ विशेषवादिनामाचार्यस्य गीर्वाणी तस्याः गुंफः रचना तस्याः श्रवणे आबद्धा बुद्धिर्येषां । १० चंद्रप्रभचरितेतिकाव्यसंबंधिनी । ११ व्याघ्र. । १२ प्रयत्नपूर्वकरचनायामुद्यता । १३ प्रमादमाचरति । १४ दोषग्रहः पक्षे ।

दुर्जनस्य बहुच्छिद्रं तत्प्रवेष्टुमनीश्वराः ।
प्रविशंति गुणाश्चित्रं निश्छिद्रं धीमतां मनः ॥ ३५ ॥
तस्मात् सतामुपस्कारं[1] मत्प्रयासो व्यपेक्षते ।
मणिराकरजः शुद्ध्यै तज्ज्ञस्येव क्रियाविधिम् ॥ ३६ ॥
अस्ति भारत[2]वास्येऽस्मिन् जनांतः शांतकल्मषः ।
सुखाभिरतिहेतुत्वात् सुरम्याख्यस्तनूभृताम् ॥ ३७ ॥
भ्रांता[3]लिप्रस्तरं व्योम शालीयामोदै[4]र्वासितं ।
घनांतेऽपि बिभर्तीव यत्र काल[5]वलाहकम् ॥ ३८ ॥
भुज्यमाना जनैः स्वैरं यस्मिन्नुद्भासि[6]तांबराः ।
न त्यजंति कु[7]लीनत्वं धान्यपाकसमृद्धयः ॥ ३९ ॥
शंकां यत्र भुवो रात्रावुन्मिषन्निधिदीप्तयः ।
अवाप्तशालिपाकेषु पामराणां प्रकुर्वते ॥ ४० ॥
सस्यवृद्धीर्मुदा यत्र श्यामाङ्गीः प्रसवोन्मुखीः ।
आपगाः स्वपयःपुष्टाः पश्यंतीवांबुजेक्षणैः ॥ ४१ ॥
नद्यः स्फटिकपाषाणदीप्तिभिर्यत्र पूरिताः ।
वहंतीव शुचौ[9] शुष्कै[10]वारोऽपि बृहदंभसः ॥ ४२ ॥
इक्षवो यत्र वाटेषु पाकभंगगलद्रसाः ।
प्रवाहा[11]य प्रकल्प्यंते पांथक्लमै[12]तृषामुषे ॥ ४३ ॥
वनेषु यत्र कर्पूरद्रुमरेणुसुगंधयः ।
माधवीमुपगूहंते मारुता बहुवल्लभीः ॥ ४४ ॥

---

१ गुणाधानेऽर्थे कृञ्धातोः सुट् । २ भरतक्षेत्रे । ३ भ्रमन्तोऽलय एव प्रस्तरं यत्र तत् । ४ शालीनामामोदेन सुगंधितं । ५ कृष्णमेघम् । ६ उद्भासितानि गंधयुक्तानि अंबराणि यासां । पक्षे–उद्भासितं अंबरमाकाशं याभिस्ताः । ७ कौ पृथिव्यां लीनत्वं । अन्यत्र–उच्चकुटुम्बित्वम् । ८ यथा स्वपयसा दुग्धेन परिपुष्टाः पुत्रं प्रसोतुमुन्मुखीर्वत्सला मातरः पश्यंति तथैव स्वपयसा जलेन पुष्टिंगताः सस्यवृद्धीर्नद्यः कमलरूपैर्नेत्रैः प्रेक्षंते । ९ ग्रीष्मर्तावपि । १० शुष्कं वार्जलं यासां ताः । ११ पथिकजनक्लांतिकारिणीं तृषां मुष्णातीति तस्मै । १२ क्लमस्यार्थे विकारे १।४।२६। इति चतुर्थी ।

स्फटिकेभ्यो गिरेर्यत्र पादेभ्यः पथिका रवेः।
विवेचयंति हंसानां सरांसि मधुरध्वनैः॥ ४५॥
सरस्तरंगसंघातस्खलद्वातावहाः शुचौ।
कुर्वंति पांथविश्रामं यत्र चंदनवीथयः॥ ४६॥
पुण्यपापक्रियावार्तातिक्रमातिक्रांतवैभवाः।
यस्मिन्नन्योऽन्यसंपत्त्यै जना न स्पृहयालवः॥ ४७॥
कृतपुण्यजनाकीर्णं पुरं तत्रास्ति पोदनं।
पांथा यस्मिन्नयत्नेन प्राप्नुवंति कृपौदनम्॥ ४८॥
दीप्तरत्नमयो यत्र प्राकारो भाति भासुरः।
पर्यटन् पुररक्षार्थं प्रतीप इव भूपतेः॥ ४९॥
अरुणस्तंभरत्नांशौ द्वारि यस्य प्रवेशिनां।
मनुजः कुंकुमाश्लिष्टादितरो न विभिद्यते॥ ५०॥
यस्य खातांभसि स्नाताः स्फुरन्माणिक्यदीधितौ।
स्पर्शेनोष्णेन बुध्यंते तटे शीतालवोऽनलम्॥ ५१॥
शिखरप्रोतरत्नानां खातांबुपरिवेषिणः।
यस्य सालस्य शोभंते पल्लवा इव रश्मयः॥ ५२॥
यस्य गोपुरशूलाग्रदारितास्तव्यथा इव।
रसंतो रसदाः काले निजं मुंचंति जीवनम्॥ ५३॥
पूर्णकुंभस्तनीयस्यालीढमौल्या निशामुखे।
वेश्या इव करै रागी रथ्याः स्पृशति चंद्रमाः॥ ५४॥

---

१ स्फटिकनिर्मितप्रत्यंतपर्वतसरसोः शुक्लत्वेन सादृश्याद् विना कारणं तयोर्भेदं ज्ञातुमशक्यत्वात् कर्णप्रियैर्हंसरवैर्जानंतीति भाव.। २ सरसो जलाशयस्य तरंगाणां वीचीनां संघातेन स्खलंतं वातमावहंतीति तथोक्ता.। ३ स्वार्थेऽण्। ४ मध्ये इति शेषः। ५ दिक्शब्दा० ३।४।४३ इति-इतर शब्दयोगे पंचमी। ६ प्राकारस्य, सालवृक्षस्य च। ७ रस जलं ददते इति। ८ वर्षाः। ९ "जीवनं वनं" इत्यमरात् जीवनं जलं पक्षे प्राणम्। १० पूर्णकुंभा एव स्तना पक्षे-पूर्णकुंभ इव। ११ माल्यसहिता.। १२ हस्तैः किरणैश्च।

कुसुमानि सुगंधीनि निष्कुटे यस्य वीरुधां ।
पिबंति भ्रमराः स्त्रीणां गृहे वक्त्राणि वल्लभाः ॥ ५५ ॥

तन्वीनां सहजं बाल्यं नवयौवनसंग्रहे ।
यत्र यूनां मनःकूपं निर्वेदेनेव गच्छति ॥ ५६ ॥

यत्र दुग्धच्छटाशुभ्राश्रियं भोगस्पृहावतां ।
तन्वीकटाक्षविक्षेपा रागोपादानहेतवः ॥ ५७ ॥

वेदीरत्नप्रभोत्कीर्णाः प्रासादाः यत्र पांडुराः ।
सेंद्रचापशरन्मेघविभ्रमं साधु बिभ्रते ॥ ५८ ॥

गृहाग्रोन्नतरत्नानां स्फुरंत्यो रश्मिसूचयः ।
दिवाऽपि यत्र कुर्वंति शंकामुल्कासु पश्यताम् ॥ ५९ ॥

आस्तीर्णा विपणिर्यत्र मण्यमाणिक्यरोचिषा ।
प्राप्ता बालातपेनेव व्योमपाथेयलिप्सया ॥ ६० ॥

यत्रेन्द्रनीलनिर्माणगृहभित्तीरुपस्थिताः ।
हेमवर्णास्त्रियो भांति कालाभ्राणीव विद्युतः ॥ ६१ ॥

भवनोत्तंभिता यत्र पताकाः पीतभासुराः ।
भावयंत्यघने व्योम्नि क्षणदीधितिविभ्रमम् ॥ ६२ ॥

हरिन्मणिमयारंभासु न्मयूखां जिघृक्षया ।
दूर्वांकुरधिया यत्र वत्सा धावंति देहलीम् ॥ ६३ ॥

अगाधोऽगाधसंगमो गुणी कर्कशदंडभृत् ।
अर्घदाशयमत्र राजा श्रीनिलयोऽभवत् ॥ ६४ ॥

भानुं दिक्चक्रमाक्राममद्वितीयेन तेजसा ।
व्याप्नुवंतं जहासेव स सहस्रेण तेजसा ॥ ६५ ॥

---

१ गृहवाटे । २ यूनाम् । ३ दुग्धधवलैः । ४ ऐन्द्रस्य-शरन्मेघस्य च । ५ भागस्य प्रभा संहितस्य च । ६ आकाशगमनसमये पाथेयार्थमिव सञ्जुमिलितया । ७ इन्द्रनीलमणिनिर्मितगृहाणां भित्तीः समुपस्थिताः । ८ कृष्णमेघानुषक्तिकृत दर्शः । ९ विद्युद्विभ्रमम् । १० अर्घं दातुमिच्छया । ११ प्रस्तरभाग्यमार्गवर्णानां ।

स मनोज्ञकलाकांतिरुदयारक्तमंडलः ।
राजा मृदुकरोल्लासैः कुमुदानंदमादधौ ॥ ६६ ॥
तादृशी पात्रता तस्य तं गच्छंतं करेच्छया ।
शिरोदारप्रदानाय शत्रवोऽपि यदभ्ययुः ॥ ६७ ॥
आशया कृतमर्यादे भुवने तस्य मध्यमे ।
सांऽष्टप्राकारखाताद्याः शोभायै पत्तनादिषु ॥ ६८ ॥
तस्य धर्मभृतो युद्धे गुणारोपितशक्तयः ।
पत्रिणोऽपि स्थिरावस्थानुदास्थन्नवनीभृतः ॥ ६९ ॥
कामवर्षी स सर्वस्मिन्नुन्नतेष्वधिकक्रियः ।
तथापि जलदस्येव पङ्गुणाः सत्पथस्थितेः ॥ ७० ॥
निर्गतं दित्सतस्तस्य न लक्षादूनमाननात् ।
प्रत्यपद्यंत संतस्तं तथापि मितभाषिणम् ॥ ७१ ॥
धर्म्यमाज्ञाविपाकं स लोकस्थित्या वहन्नपि ।
विचिकाय न कस्यापि चित्तेऽपायं दयापरः ॥ ७२ ॥
संवद्धोऽपि सदाऽध्यक्षैः करणकर्मवर्तिभिः ।
अस्तब्धः सन्नुपालब्धस्स्थूलमर्थमनश्वरम् ॥ ७३ ॥
जनस्य क्षुण्णमार्गेण दीर्घयात्रां प्रकुर्वतः ।
श्रमतापहरास्तस्य प्रपा इव विभूतयः ॥ ७४ ॥
सुप्तोऽपि चक्षुषा पश्यन् जगत्तेजोमयेन सः ।
दंडेन दर्शयामास मार्गमुन्मार्गगामिनाम् ॥ ७५ ॥
कोशागर्भात् स आकृष्टाद्दानार्थं खड्गरत्नयोः ।
कोपप्रसादयोस्सिद्धिमवापदरिमित्रयोः ॥ ७६ ॥

---

१ मनोहरा चतुष्षष्टिकलानां कांतिर्यस्य, पक्षे—कला षोडशो भागः। २ उदये प्रादुर्भावसमये ईषद्रक्तमंडलवान्। ३ नृपश्चंद्रश्च। ४ कोमलकिरणानामुल्लासैः पक्षे राजप्रदेयन्यूनभागैः। ५ कु. पृथ्वी। ६ श्रेष्ठग्रीवप्रदानाय। ७ सहस्रसभावः। ८ प्राप्नुवन्, अकंपयंश्च। ९। मेघकैः। १० आज्ञानुसारवर्तिभिः। ११ 'प्रपा पानीयशालिका' इत्यमरः।

दुःखकूपात् प्रजा भूपः स चित्रं जैत्रविक्रमः ।
यदुज्जहार दूरेऽपि भुजेनाजानुलंबिना ॥ ७७ ॥
तस्याराधयतो धर्मं नित्यं तत्परया धिया ।
अनश्यतां न कामार्थावभोगेऽपि भूपतेः ॥ ७८ ॥
तद्गुणामृतसंपातात् स्वयं कामदुघा मही ।
तत्फलानुभवे यत्नः प्रजानामवशेषितः ॥ ७९ ॥
तस्य सूक्ष्मविदस्तेजो दैवमन्यदिव प्रजाः ।
अबूभुजन्फलं काले प्रच्छन्नस्यापि कर्मणः ॥ ८० ॥
हितपाकं प्रजानां स दाहमाक्रम्य तेजसा ।
कुर्वन्नपि प्रचख्ये न कृष्णवर्त्मा शुचिर्गुणैः ॥ ८१ ॥
तं दुरासदमासाद्य विश्वभूतिं प्रभावितम् ।
उवाचेदं वचो मंत्री विश्वभूतिर्विशांपतिम् ॥ ८२ ॥
देव देवांगनापांगरुचिर्गौरगुणा गुणाः ।
किन्नरैर्गायिषेरंस्ते मानुषोत्तरमूर्धनि ॥ ८३ ॥
त्वयि शास्तरि लोकस्य शिवमेव गुणोत्तरं ।
प्रपीडयति मामेव केवलं प्रबला जरा ॥ ८४ ॥
देव ! पश्य जपाधारा विशुद्धा रक्तवाससः ।
जरसा जरठाः संनो निर्भर्त्स्यंते मम द्विजाः ॥ ८५ ॥
वार्द्धक्यवेपथेदेन स्खलतोऽनुपदं मम ।
चित्तशुद्धयेव निर्यशा दृश्यते पांडुरं शिरम् ॥ ८६ ॥
दौर्बल्यं मम दर्पेव जरिणो जनगर्हितं ।
दुःप्रेष्यवद्य वर्तते स्वकार्ये चक्षुरादयः ॥ ८७ ॥

---

१ जयशीलपराक्रमवान् । २ अभोगत इव । ३ मही तद्गुणादेव प्रसविनी नतो प्रजानां तद्भोगे एव यत्नोऽवशिष्टः । ४ तत्तत्समये । ५ हीनचरित्रोऽमिश्र । ६ सुरस्त्रीकटाक्षविक्षेपवत् शुभ्राः । ७ शासके । ८ रक्तवस्त्रधारिणः । ९ निर्गच्छंता । १० दुःप्रत्ययत् ।

जरसेयं सपत्नीव मद्गात्रानपवर्तिनी।
प्रतिहंति च कांतानां मत्समागमकौतुकम् ॥ ८८ ॥
प्रेषितः प्राप्तदौर्बल्यमचिरादभियास्यता।
मां प्राप्तवानयं दंडः पुरस्तादिव मृत्युना ॥ ८९ ॥
वयसा पश्चिमेनेदमत्यंतोपात्तकंपनं।
उद्योगमिव तृष्णायां निषेधति शिरो मम ॥ ९० ॥
ततो मामनुमन्येथा जिघृक्षुं जिनदीक्षितं।
वयःपाकनिगारोऽयमन्यथा मां न मुंचति ॥ ९१ ॥
यदि दृष्टिर्न जैनीयं कः पुमान्नोपसर्पति।
गंभीरं भवपातालमविद्यामृगतृष्णया ॥ ९२ ॥
इति विज्ञाप्य राजानमाश्वास्यांबुधरीं प्रियां।
निषिध्यानुगतौ पुत्रौ स प्रतस्थे तपोवनम् ॥ ९३ ॥
कमठे सत्यपि ज्येष्ठे तस्य पुत्रे गुणाधिकं।
मरुभूतिं महीपालः साचिव्ये प्रत्यतिष्ठपत् ॥ ९४ ॥
अमात्यलक्ष्मीमासाद्य स बभार वसुंधरां।
समुद्रमेखलाकांतां प्रियामपि वसुंधराम् ॥ ९५ ॥
आकृष्टास्तस्य मंत्रेण परेषामपि संपदः।
अनुरागप्रकर्षेण समाश्लिष्यन्महीपतिम् ॥ ९६ ॥
सदसद्दर्शनोपायं श्रवणानुगतायतिं।
नृपस्तमात्मनो मेने तृतीयमिव लोचनम् ॥ ९७ ॥
नीरसंभृतया तेन तीक्ष्णयाऽजिह्मधारया।
बुद्ध्या निस्त्रिंशयष्ट्या च विभिदे मर्म शात्रवम् ॥ ९८ ॥

---

१ आगमिष्यता। २ जरसा। ३ वृद्धावस्थाया निगलनम्। ४ जिनोपदिष्टसम्यग्दर्शनादिचक्षुर्विना सर्वे एव मिथ्याज्ञानरूपमृगतृष्णावशाद् जन्मकूपे पतंतीत्यर्थः। ५ धारिणीम्। ६ एतन्नाम्नीं स्त्रीम्। ७ उभयत्रापि समानम्। ८ जलसहितया, नीरसं दुहृदं भृतया धारिण्या दंडमित्र्येत्यर्थः।

भोगतृष्णातुरे मूर्खे कमठे वारुणीप्रिये ।
स यावत् स्नेहसंबंधात् परां भक्तिमदर्शयत् ॥ ९९ ॥
यौदनस्याभिगोप्तारमादिश्य सचिवाग्रजं ।
सामात्यः प्रययौ राजा वज्रवीरजिगीषया ॥ १०० ॥
बलेन चलतस्तस्य भाराक्रांता समंततः ।
प्रागेवावनता धात्री पश्चाद् मार्गे महीभृतः ॥ १०१ ॥
अनेकैभूभृदायद्धा दिक्प्रसिद्धमतंगजा ।
सानुरागवती तस्य धरेव चलिता चमूः ॥ १०२ ॥
भूर्भारिकक्रियाबंधोस्तस्याभ्यागच्छतोऽद्रिभिः ।
स्वागतं जगदे नूनं सेनाघोषप्रतिस्वनैः ॥ १०३ ॥
जहि गुल्ममधस्कंद पंकमुद्धर कंटकं ।
गच्छन् प्रियं व्यधत्तेव स बली वनपद्धतेः ॥ १०४ ॥
औरूढसिंधुरस्कंधं राजन्यपरिवेष्टितं ।
श्वेतच्छत्रेण राजानं जज्ञुर्जानपदा जनाः ॥ १०५ ॥
भूरजः सैन्यसंपातादुत्पपात नभःस्थलं ।
तस्य धूम इवाभ्यग्रस्तेजोवन्हेर्ज्वलिष्यतः ॥ १०६ ॥
अरौत्सीदरिमुद्दर्पं सपक्षं मधुपं तथा ।
संकुचत्यत्र संपत्ति यथा तीव्रो हिमागमः ॥ १०७ ॥
निर्गत्य वज्रवीरोऽपि सबलो नगराद् बहिः ।
प्रत्यग्रहीन्महानाथं बाणवर्षैरणातिथिम् ॥ १०८ ॥
खड्गसंघट्टनोद्भ्रांतस्फुलिंगैः शरमंडपैः ।
युद्धं व्योम्नि तयोश्चक्रे सतडिन्मेघविभ्रमम् ॥ १०९ ॥

---

१ वज्रवीरं जेतुमिच्छया । २ बहुनृपतिभिर्वेष्टिता, पक्षे-असंख्यपर्वतैः । ३ दिक्षु ख्याता हस्तिनो यस्याः । अन्यत्र-दिग्गजा. । ४ भूधारकत्वाद्वपुः । ५ समासे सप्तम्यन्तस्य पूर्वनिपातः । ६ येनांगविकारेत्थंभावौ । १।४।३५ इत्थंभावे तृतीया । ७ जनपदे देशे भवाः । ८ युद्धनातिथिम् ।

प्रहिता वज्रवीरेण श्यामपत्राः शिलीमुखाः ।
नारविंदमुपासर्पन्नपि तेजोविकस्वरम् ॥ ११० ॥

घनविक्रमसंनाहभंगान्मृदुरिवाभवत् ।
सदंडमरविंदस्य कर्कशं सोढुमक्षमः ॥ १११ ॥

भयेन धावतो युद्धादव्यवस्थितदिक्तया ।
तस्याग्रे चारविंदस्य जयवार्ता जवाद् ययौ ॥ ११२ ॥

राजा पश्चात् समाकम्य करणैर्बंधनिष्ठुरैः ।
करग्रहेण बुभुजे स पद्मनगरश्रियम् ॥ ११३ ॥

नृपतिरहितमेवं वज्रवीरं विजित्य
स्वपुरमभिजगामोद्दामलक्ष्मीसमेतः ।
विकचकुमुदताराहारशुभ्रं यशः स्वं
दिशि दिशि सवधूकैर्गापयन्किनरौघैः ॥ ११४ ॥

वातोन्नर्तितकेतुयष्टिभुजया व्याहूयमानस्तया
तात्पर्यादिव विप्रयोगविधुरामासाद्य रम्यां पुरीं ।
कुर्वन् जैनमहप्रबंधविधिना लोकस्य भूरिश्रियं
राजा वारिधिमेखलां वसुमतीं दीर्घं ररक्षाज्ञया ॥ ११५ ॥

इति श्रीवादिराजसूरिविरचिते श्रीपार्श्वजिनेश्वरचरिते
महाकाव्येऽरविंदमहाराजसंग्रामविजयो नाम
प्रथमः सर्गः ।

---

१ बाणाः । २ प्रभूतपराक्रमनाशात् । ३ शत्रुम् । ४ प्रफुल्लकमलताराहारवच्छुभ्रम् । ५ वातेनोन्नर्तिता उच्चैर्नर्तिता केतुयष्टिरेव भुजा यस्यास्तया । ६ विप्रयोगेन वियोगेन विधुरां दुःखिताम् । ७ मह उद्धव उत्सव इत्यमरः ।

# द्वितीयः सर्गः ।



अथैकनाथं वसुधांगनायाः पुरस्य वृत्तांतविशेषवेदी ।
निवेदितात्मा सचिवद्वितीयं चरो नराधीश्वरमाससाद ॥ १ ॥
स भूरजश्चुंबितमस्तकेन प्रणम्य भूमावुपविश्य वाग्मी ।
प्रभोर्नियोगात् स्वनियोगमेवं प्रचक्रमे वक्तुमनुक्रमेण ॥ २ ॥
शिरोभिरर्च्यं जगदीश्वराणामभिन्नमुद्रं नृप ! शासनं ते ।
यशस्तवाक्रामति तेन सर्वा दिशो निशानाथमरीचिशुभ्रम् ॥ ३ ॥
यशो विशुद्धं नृप ! तावकीनं कलंकितं तत् कमठेन मन्ये ।
वियोगिकांतामुखरंजनेन प्रावृड्घनेनेव हिमाद्रिकूटम् ॥ ४ ॥
त्वयि प्रयाते नृप ! वज्रवीरं जेतुं स गोप्ता किल पौदनस्य ।
स्वेच्छाविहारी मरुभूतिकांतां वसुंधरामैक्षत पंकजाक्षीम् ॥ ५ ॥
भ्रूवल्लरीकार्मुकयष्टिभाजा कर्णांतकृष्टेन निकृष्टचेताः ।
तन्नेत्रबाणेन निसर्गलौल्यादविध्यतासौ हृदि मन्मथेन ॥ ६ ॥
अखंडैकार्कश्यगुणोपपन्नौ तस्याः कुचौ निर्जितकुंभिकुंभौ ।
तयोरसत्वेगाल्लुठनादिवाभूदनेकभंगं खलु तस्य चित्तम् ॥ ७ ॥
न्यधत्त चित्ते मुखचंद्रबिंबं तस्याः स कामानलतीव्रतापे ।
शमाय पापेन तथापि तस्य सरागिरुद्दामविवृद्धिरासीत् ॥ ८ ॥
स्मृतिप्रबंधेन वसुंधरायाः बिंबाधरं चेतसि संदधानः ।
स तप्तनिर्मुक्तशराग्रभागममंस्त भग्नं मकरध्वजस्य ॥ ९ ॥

---

१ अभिन्ना मुद्रा यस्य तत् । २ चंद्रकिरणवच्छुभ्रं । ३ वियुक्तनारीमुखं रंजयतीति तेन । ४ भ्रूवल्ली एव धनुर्यष्टिस्तां भजतीति तेन । ५ पूर्णकठोरं । ६ जितौ हस्तिन्याः कुंभौ याभ्यां । ७ यद्यपि लोके चंद्रः संतप्तसंतापहानये भवति, तथापि कमठपापवशात् संतापवर्धकत्वेन विपरीत एव जात इत्यर्थः । ८ पुनः पुनः स्मरणेन ।

मनोरमावर्तिनि नाभिकूपे निपातितं तेन मनस्तदीये ।
पुनर्न कर्मण्युदतिष्ठत स्वे गभीरपातालमिव प्रविष्टम् ॥ १० ॥
निषेधनायेव पुनः प्रवृद्धैः कांचीगुणेनाभिनिबध्यमानः ।
सविस्तरस्तन्मनसाऽणुनाऽपि व्याप्तो मृगाक्ष्या युगपन्नितंबः ॥ ११ ॥
धृत्वा लतांगीं करपल्लवे तामसक्तमाक्रष्टुमिवानिवृत्तम् ।
निरुद्धपंचेंद्रियवृत्तिचित्तं तं मृत्यवेऽयच्छदिव क्षणेन ॥ १२ ॥
पूर्वापरालोचनकर्मशून्या तथागतस्येव मतिस्तदीया ।
बृहत्समारोपतया कृशांग्याः कृशेऽवलग्ने सुतरामसाक्षीत् ॥ १३ ॥
स विह्वलः सन्मदनानलेन किमप्यकृत्वा जनतासमक्षं ।
नृवीर! विश्वास्य जनेन सार्धं न्यविक्षतोद्यानमशेषितात्मा ॥ १४ ॥
अतिप्रवृद्धेन मनोभवाग्नेस्तमोष्मणा दुर्विषहेन राजन् ।
अनीयत पावकतां तदंगे पुनः पुनश्चंदनपंकलेपः ॥ १५ ॥
स्थितोऽपि तस्यामशनैरशोकप्रवालशय्यां स विवृद्धतापः ।
ज्वालामिवाबुद्ध दवानलस्य स्मरातुरस्यास्ति कुतो विवेकः ॥ १६ ॥
स चंदनांभःकणसेकशीतैरवीजितः सन्कदलीद्रुमाणां ।
मुहूर्तमापांडुरगर्भपत्रैर्विपानलस्पृष्ट इवामुमूर्च्छ ॥ १७ ॥
मुहुः समुत्थेंदुकलाविशुद्धां वहन्मृणालीमुरसि स्मरार्तः ।
असून् स्वकीयानर्दतस्तदानीं दंष्ट्रामिवातर्कयदंतकस्य ॥ १८ ॥
आंदोलितोपांतसरस्तरंगो विनर्तकश्चंदनवल्लरीणां ।
विदाहकारी श्वसनोऽपि तस्य को वा प्रियो धर्मपथच्युतस्य ॥ १९ ॥
सुगंधिनीलोत्पलतल्पशायी मुहुर्द्विरेफैरुपरि भ्रमद्भिः ।
धूमायमानस्स इवाभवत् प्रागभिज्वलिष्यन् कुसुमकेतनेन ॥ २० ॥
आसादिताः पल्लवरागभंगं तच्छ्वासतापेन तदीयदुःखं ।
सामीप्ययोगादिव बालचूताः स्वयं विभागागतमन्वभूवन् ॥ २१ ॥

---

१ धुद्रम्य । २ कटिप्रदेशे । ३ संतिष्ठति स्म । ४ जनसमुदायसम्मुखम् ।
५ उष्णताम् । ६ भक्षयतः । ७ वातः । ८ कामेन । ९ विभागे आगतम् ।

व्यापारयन् दिक्षु दृशौ स कामतीव्राभिषंगेण यथा वितर्कं ।
पुरो निषण्णामिव तामपश्यत् कामो हि कामं भ्रममातनोति॥२२॥
कृतोपरोधं कलहंसकेन पृष्टस्स तस्मै हृदयोपमाय ।
निमित्तमाख्यन्नयना[2]भिकांतामनात्यकांतां मदनज्वरस्य ॥ २३ ॥
स सत्वरं तामुपसृत्य तन्वीमवोचदित्थं कलहंसनामा ।
प्रियाग्रजस्ते सुदति ! ज्वरार्तो न बुध्यते स्वं च समीपमन्यं॥२४॥
प्रतिक्रिया च क्रमते न तस्मिन् विकल्पिता कर्मविशेषविद्भिः ।
स संकटप्राणदशावलंबी त्वां द्रष्टुमन्विच्छति सानुरागः ॥२५॥
निशम्य वाचं कलहंसकस्य यानं समारुह्य सखीसमेता ।
अयादनालोचनया नतभ्रूः तस्यांतिकं केतुनिपीडितस्य ॥२६॥
कृतोपचारा विनयेन तन्वी ततस्तदाकारविशेषदृष्ट्या ।
अबुद्ध तस्यांगमनंगदग्धं स्त्रियो हि तस्मिन् विषये विदग्धाः॥२७॥
अथोन्वदेवं तमजानतीव ज्वरस्य ते किं तु निमित्तमस्य ।
कियंति वा संति दिनानि वैद्याः प्रतिक्रियां कीदृशमादिशंति॥२८॥
स उच्छ्वसन् किंचिदकुंचितांगा आकर्ण्य वाचं मृगलोचनायाः ।
ह्रिया ह्रियेव प्रविमुच्यमानो भ्रातृप्रियां कष्टमवोचदित्थम् ॥ २९ ॥
मनोभवस्तन्वि ! निमित्तमस्य छित्राण्यहानि ज्वरविभ्रमस्य ।
चिकित्सितं वेद ममांतरात्मा शंकायुतस्तत् सुलभं न वेत्ति॥३०॥
भेतव्यमादौ परलोकभंगाद्वंध्यकोपश्च जने मनोज्ञः ।
तेनोभयास्तस्पृगियं मतिर्मे प्रियाधिरूढेव बिभर्ति लौल्यम् ॥३१॥
मृगी मृगेणेव घनं जनानां लज्जाभिमानेन मनोऽधिरोते ।
तावत् समाक्रामति तीव्रपाती यावन्न शार्दूल इवांगजन्मा॥ ३२ ॥
धुनोति नूनं जनने द्वितीये धर्मस्तदाज्ञामतिलंघयंतं ।
मृगेक्षणे ! न क्षमते मनोभूः क्षणेऽपि भंगं निजशासनस्य ॥३३॥

---

१ दृष्टपूर्वकं यथास्थानया । २ नेत्राभिरामाम । ३ शोभनदन्ते । ४ कामा र्तस्य । ५ अपगोऽपराधः । ६ उभयस्यापि स्पृहाऽऽरहिता ।

अकारणोद्वेगकरो नराणां त्वया स सौहार्दमिव प्रपन्नः ।
उदासिता तन्वि ! तवांतिकस्थं यत् सांप्रतं मां प्रति पुष्पधन्वा॥३४॥
भावोद्धतं भावगभीरमित्थं निवेद्य तस्मिन् विरते नतभ्रूः ।
अभाषतैवं भयकोपमिश्रं रसांतरं किंचिदिव प्रपन्ना ॥ ३५ ॥
गुणैर्गुणी योजयिता जनस्य दोषानदोषी च निराकरिष्णुः ।
यदि त्वमुन्मार्गमुपाजिहीथाश्चिरंतनो नश्यति हंत पंथाः ॥ ३६ ॥
विवेकवीतं विरसक्रियांतं संकल्परम्यं चरितं स्मरस्य ।
न तेन कुर्वंति यशो मलिष्टं लोकद्वयश्लाघ्यगुणं गुणाढ्याः ॥३७॥
मनःप्रसंगोऽपि परांगनायां क्षिणोति पुण्यं प्रथमं जनस्य ।
स पुण्यरिक्तस्तनुवाक्प्रसंगं कृत्वापि सौख्यं लभते किमाख्यं॥३८॥
गुणानुलेपात् सुभगं भविष्णोर्लक्ष्मीर्वशे तिष्ठति मानवस्य ।
सैषा परस्त्रीषु कृताभिलाषमीर्ष्यावतीवोज्झति निर्विपंगा ॥ ३९ ॥
हितं यदीच्छेरिदमीदृशं मे पुनर्वचो मा चकथः कथंचित् ।
इति स्फुटोक्ति प्रतिषिद्ध्य तन्वीं विभक्तमेवं कमठोऽभ्यधत्त ॥४०॥
विशृंखलो रागगजो ममायमुपेयवांस्तन्वि ! नितंबशैलं ।
न शिक्षया ते विनिवर्ततेऽसौ रसानभिज्ञोऽधरपल्लवस्य ॥ ४१ ॥
वपुर्मनोज्ञं नवयौवनाढ्यं कला च शिक्षा विपुला च लक्ष्मीः ।
अचूषतः सर्वमिदं निरर्थं मनोरमाणामधरोष्ठबिंबम् ॥ ४२ ॥
किंचापरं कांचनमेखले ! त्वां न भोगमीप्सन्नुपदांत्वयामि ।
स्मरस्तु मां तन्वि निहंत्यकांडे निवार्यतामेष खलस्त्वयेति ॥४३॥

इति प्रयुक्तानुनयस्य तस्य
प्रियासु संख्यामगमन्मृगाक्षी ।
स्वभाववश्यं मकरध्वजस्य
स्त्रीणां मनः किंनु कृतोपजापम् ॥ ४४ ॥

१ योजयितुं शीलमस्य । २ मलिनतमम् । ३ नितरां संगोज्झिता । ४ गणनाम् । तदभिप्रायं स्वीकृतवतीत्यर्थः । ५ कृत उपजापो भेदो यस्य तत् ।

अपि स्वयं सिंहपराक्रमस्य
पुंसोऽभिगुप्ता भुजपंजरेण ।
न कामिनी लंघयति स्मराज्ञां
लब्धावकाशा तु न किं करोति ॥ ४५ ॥

रूपं कुलं यौवनमाभिजात्यं
नतभ्रुवस्तत्र विचारयंति ।
क्वचिन्निकृष्टेऽपि रसान्निविष्टाः
कंदर्पदेवं परितर्पयंति ॥ ४६ ॥

उद्यत्प्रभावस्य रवेर्दिनादौ
करावरुद्धापि गवाऽऽतपश्रीः ।
सरागमाश्लिष्यति सानुरागा
पद्मं न हि स्त्रीप्रकृतिर्गुणज्ञा ॥ ४७

स्थिरं प्रकृत्या फलदं समूलं
छायोपपन्नं समुपाश्रयंती ।
द्रुमं लता पुष्पवती तु काले
स्वैरोपभोगं मधुपाय दत्ते ॥ ४८ ॥

आस्तामयं स्त्रीप्रकृतिप्रवादो
व्यावृत्तिहेतुर्विषयान् मुमुक्षोः ।
शृणु परं तस्य दुरान्तरित्वं
निशम्यतां देव ! तदप्यशेषम् ॥ ४९ ॥

स यौवनोष्माणमभीतचेता-
स्त्यदेवचाहं गणिकाजनस्य ।
वक्षःस्थलेनोदजहाद् रहस्ये
मर्ल्लोदरारं कुचकुंभभारम् ॥ ५० ॥

---

१ रक्षिता । २ बाहुरूपपंजरेण । ३ कंदः हिरण्यदेवो । ४ पद्मो-पुष्पं कमलानी रजनीस्पर्शः ५ मधु मत्तं विरमीति तस्मै भ्रमराय भ्रमराद । ६ कौतुकिन्ये । ७ भूरताद ।

स राजगेहाद् दिवसेषु निर्यन्।
मातंगमातुह्यत मार्गपीतात्।
तथाप्यसंभाव्य नमन् मनुष्या-
नसह्यपीडानकरोद्दुरात्मा ॥ ५१ ॥

अपश्यदापूरितरंध्रभागं
तवानुकुर्वन् नृप! राजवीथौ।
इभेंद्रयायी पुरसुंदरीणां
नेत्रोत्पलैः सौधगवाक्षजालम् ॥ ५२ ॥

इतीदृशं गर्हितमन्यदन्यत्
नरेंद्र! तस्यास्ति बहुप्रकारम्।
अनिर्जितात्मा कुरुते हि नो यत्
तत्सर्वमुर्व्यामथवा प्रदुष्टम् ॥ ५३ ॥

इत्थं यथावत् प्रणिगद्य तस्मि-
न्निच्छाधिकप्राप्तनृपप्रसादे।
चरे गते तं मरुभूतिरेवं
प्रजार्यमार्यां गिरमावभाषे ॥ ५४ ॥

असत्यवैद्यं न वदंति दंडा-
दसह्यदुःखादनुजीविनस्ते।
संधायतां देव! तथापि वाक्यं
चरस्य तद्वैद्वनिर्णयाय ॥ ५५ ॥

विचार्य कुर्वल्लँभतेऽनुरागं
जनस्य लक्ष्मीः खलु तन्निमित्तात्।
बुद्धौ विशुद्धिं च परां निधत्ते
द्वाराणि पापस्य हि सा पिधत्ते ॥ ५६ ॥

---

१ असत्फल। २ अत्याधिकप्राप्तो नृपस्य प्रसादो येन। ३ मिथ्योक्तिम्।

अधिष्ठितस्सन्नपि संनिकृष्टे
करोति चेदिंद्रियबंधुवर्गः ।
भ्रमं प्रवर्तुंविषमाभिसंधिः
किमंग ! भृत्यो विषये परोक्षे ॥ ५७ ॥

अतः स्वयं तस्य विविच्य दोषं
यतस्व नीत्या नृप ! निगृहीतुं ।
जनस्य मन्युज्वलनावलीढा
तवाऽन्यथा म्लायति कीर्तिवल्ली ॥ ५८ ॥

तदेति राज्ञा जनतासमक्षं
विचिन्वताऽज्ञायि तथा स कूर्मः ।
वसुंधरासंवहनायकृत्ये
यथा व्यचरतिष्ट वचो जनस्य ॥ ५९ ॥

जनस्ततो राजसमीपवर्ती
खराधिरूढं कमठं नगर्याः ।
निर्वासयामास स लोष्ठघातं
सूर्यातपत्रं परिभूय पापम् ॥ ६० ॥

असत्प्रवृत्तेरपि विप्रयोग-
स्तस्याधिकं बंधुजनप्रियस्य ।
चकार दुखं सचिवस्य दोपात्
भनक्ति न प्रेम महानुभावः ॥ ६१ ॥

चित्ते गते ज्येष्ठवियोगदुख—
भाराक्षमत्वादिव विप्रमोषं ।
चिराय तस्य प्रतिसुप्रबुद्धे—
र्न भोगवांच्छां दधुरिंद्रियार्थाः ॥ ६२ ॥

---

१ क्रोधाग्निसंस्पृष्टा । २ मरुभूतिपत्नीपाणिग्रहणादि । ३ दुश्चरित्रस्य । ४ मरुभूतेः ।

कुर्वन् प्रयत्नेन स पांथदर्शी
    वियोगदुःखी कमठानुयोगं ।
अकथ्यतैवं वचनप्रसंगे
    देवेन नीतेन वनेचरेण ॥ ६३ ॥

अमात्य ! जानामि तवाग्रजस्य
    वृत्तांतमुद्वृत्ततया गतस्य ।
यद्यस्ति ते कौतुकमत्र सर्वं
    सविस्तरं वच्मि तथाऽवधेहि ॥ ६४ ॥

इतोऽस्ति देशे दशयोजनांते
    भूभृत् स भूताचलनामधेयः ।
अत्युत्थितं यस्य सहस्रधामा
    कृच्छ्रादतिक्रामति शृंगकूटम् ॥ ६५ ॥

आमुक्तनिष्यन्दमनोज्ञहारा
    भुजालताग्रस्थितनागमुद्राः ।
बृहन्नितंबाः सविलासभारा
    मनोरमा यश्च बिभर्ति भित्तीः ॥ ६६ ॥

वनद्रुमान्निर्झरशुभ्रतोयै—
    र्घर्मेऽपि यो वर्धयति प्रकामम् ।
पादाश्रितानामभिरक्षणं यत्
    तदेव कृत्यं नु महोन्नतीनाम् ॥ ६७ ॥

यः पार्श्वभागप्रविलंबितेन
    विचित्रजीमूतकुथेन रात्रौ ।

---

१ मार्गं पश्यन्नित्यर्थः । २ कमठसंबंधिनम् । ३ सूर्यः । ४ आमुक्ता निष्यंदा निर्झरा एव मनोहरा हारा यासाम् । ५ भुजा एव लतास्तासामग्रे स्थिता नागा एव मुद्रा यासाम् । ६ बृहत्पाषाणा- । ७ ग्रीष्मेपि । ८ वि[illegible] ...नपटेन ।

नक्षत्रमालापरिवीतमूर्धा
सबद्धमन्वेति गजाधिराजम् ॥ ६८ ॥

भीमो भृशं भानुकराभिमर्शात्
यः सूर्यकांतैर्ज्वलितैर्मनोज्ञः ।
चंद्रांशुपातद्रवदिंदुकांतैः
संसर्गजा दोषगुणा भवंति ॥ ६९ ॥

विलोचनानीव सरांसि यस्मिन्
विवृत्तपाठीनमनोहराणि ।
नीलोत्पलश्रीरमणीयतारा—
साराण्युदाराण्यायतिमंति संति ॥ ७० ॥

क्रीडंति वप्रेषु सह प्रियाभि-
र्नभश्चरा यस्य गुरुप्रमोदाः ।
भृंगीगणक्षोदगलत्प्रसून—
पर्यास्ततल्पेषु लतागृहेषु ॥ ७१ ॥

गुहामुखैर्गह्वरगर्भगूढं
कंठीरवध्यानसुभीमशब्दैः ।
यः पावने वर्त्मनि वर्तमानो
मातंगयूथं कुरुते दविष्ठम् ॥ ७२ ॥

निहन्यवन्यैर्भविषाणभाजा
निर्मूलितानेकवनद्रुमेण ।
मार्गेण यस्मिन् शार्वरैः शार्यूनां
निवुध्यते कायमहत्वयोगः ॥ ७३ ॥

---

१ लुठितमीनमनोज्ञानि । २ सानुषु । ३ भ्रमरीसमूहक्षोदेन गलंति यानि प्रसूनानि तैः पर्यास्तानि तल्पानि येषु । ४ कंदरामध्यस्थितम् । ५ दूरशब्दस्येष्ठप्रत्ययांतस्य रूपम् । ६ निहन्यवनभवगजदंतसहितेन । ७ उत्पाटिता अनेकवनवृक्षा यस्य तेन । ८ वृहन्नागानाम् ।

निवेद्य वार्तां कमठस्य तस्मिन्
गृहीतसत्कारमिते किराते ।
अकथ्यतैवं सचिवेन गत्वा
दुर्मोहपाशस्खलितेन राजा ॥ ८० ॥

प्रेमानुबंधः स्वजने जनानां
क्वचित् प्रभो ! दैववलात् कुतोऽपि ।
परं प्रकृप्येत गुणप्रकर्षाद्
दोषात्तु न प्रच्यवते कदाऽपि ॥ ८१ ॥

अतो वियोगं न सहे दुरंतं
कृतागसोऽपि स्वयमग्रजस्य ।
पुनः करिष्यामि तवांतिके तं
प्रसादितं देव ! तवैष भृत्यः ॥ ८२ ॥

भूताद्रिशृंगे स तपोवियोगो
भूयान्निकारश्च स पौरनेऽस्मिन् ।
बुद्धिं गुणेषु प्रहिणोति तस्य
प्रमार्ष्टि दोषं च पुरानिविष्टः ॥ ८३ ॥

इति ब्रुवंतं तमुवाच राजा
शुचिस्मितोल्लासितदंतकांत्या ।
कुर्वन् पुरस्ताद् गगनप्रदेशं
चंद्रातपेनेव दिवाऽपि लिप्तम् ॥ ८४ ॥

अवश्यकर्तव्यमिदं हि पुंसि
यत् सर्वथा साधुजनप्रसंगः ।
विवेकसिद्धेः स भवत्युपायः
श्रेयस्करी सा च भवद्वयेऽपि ॥ ८५ ॥

---

१ गते । २ अपराधिनोऽपि । ३ चंद्रिकया । ४ दिवसेऽपि । ५ सत्संगः ।

तस्योपकंठे घनराजिरम्या
तपोभृतामाश्रमभूमिरस्ति ।
या प्रत्यहं व्योमनि होमधूमै—
र्नवांबुवाहश्रियमातनोति ॥ ७४ ॥

कुचोपमेयैः कलशैस्त्रिसंध्यं
पयः क्षरंत्यो यतिमुग्धकन्याः ।
स्वमध्यसादृश्यगुणेन यस्या
लताद्रुमं यत्र विवर्धयन्ति ॥ ७५ ॥

शाखामृगा यत्र गृहीतशिक्षा
नैसर्गिकं चापलमुत्सृजंतः ।
कुर्वंति मार्गाय नियोगदृष्ट्या
तपोभृतामंधकहस्तयष्टीः ॥ ७६ ॥

द्विजैरहस्याध्ययनस्य पश्चा—
दनंतरं पंजरवासितानम् ।
यत्रानुवादः शुकशारिकाणा—
माकर्ण्यते कर्णरसायनश्रीः ॥ ७७ ॥

जटाधरं जीर्णमुपेत्य तस्यां
तपस्विनं तस्य किलोपदेशात् ।
पराभवाक्रांतविरक्तचेता
भ्राता तपस्याभरमग्रहीत्तं ॥ ७८ ॥

मैत्रे समुन्मील्य रवौ नितांत-
मुत्तम्य बाहू स हि वासरेषु ।
तपश्चरन् दुश्चरमद्रिशृंगे-

निवेद्य वार्तां कमठस्य तस्मिन्
गृहीतसत्कारमिते किराते ।
अकथ्यतैवं सचिवेन गत्वा
दुर्मोहपाशस्खलितेन राजा ॥ ८० ॥

प्रेमानुबंधः स्वजने जनानां
क्वचित् प्रभो ! दैवबलात् कुतोऽपि ।
परं प्रकुप्येत गुणप्रकर्षाद्
दोषात्तु न प्रच्यवते कदाऽपि ॥ ८१ ॥

अतो वियोगं न सहे दुरंतं
कृतागसोऽपि स्वयमग्रजस्य ।
पुनः करिष्यामि तवांतिके तं
प्रसाद्यतां देव ! तवैष भृत्यः ॥ ८२ ॥

भूताद्रिशृंगे स तपोवियोगो
भूयान्निकारश्च स पादनेऽस्मिन् ।
बुद्धिं गुणेषु प्रहिणोति तस्य
प्रमार्ष्टि दोषं च पुरानिविष्टः ॥ ८३ ॥

इति ब्रुवंतं तमुवाच राजा
शुचिस्मितोल्लासितदंतकांत्या ।
कुर्वन् पुरस्ताद् गगनप्रदेशं
चंद्रातपेनेव दिवाऽपि लिप्तम् ॥ ८४ ॥

अवश्यकर्तव्यमिदं हि पुंसि
यत् सर्वथा साधुजनप्रसंगः ।
विवेकसिद्धेः स भवत्युपायः
श्रेयस्करी सा च भवद्वयेऽपि ॥ ८५ ॥

---

१ गते । २ अपराधिनोऽपि । ३ चंद्रिकया । ४ दिवसेऽपि । ५ सत्संगः ।

अहं तयाऽपि प्रतिवेदनीये
कायेऽपि दोषे सति निर्विषंगः।
विवेकनिष्णातमना मनीषी
किमंग! बाह्येषु करोति तृष्णाम्॥ ८६॥

कुलेन कुर्वन्नपि खेदमात्रं
शक्यो नियोगस्तव निस्तरीतुम्।
भ्रात्रा निकारप्रतिकोपितेन
प्राणक्षयायैव पुनः प्रयोगः॥ ८७॥

अनर्थमन्विच्छसि यद्युपेया-
स्तमुल्वणक्रोधहुताशदग्धम्।
स्वयं करास्फालितमस्तकं वा
कुरुष्व कंठाभरणं भुजंगम्॥ ८८॥

अप्राप्य कामं नृपतेरमात्यः
प्रत्यागतस्तं गृहमर्धरात्रे।
ज्यायांसमुद्दिश्य स निर्जगाम
क्रोधादशांतं यदि वा कृतांतम्॥ ८९॥

महीपतिस्तां मरुभूतियात्रां
विचारयंश्चेतसि निर्विचारम्।
प्रासादशृंगे महिषीद्वितीयः
स्थितस्त्वेकमालोक्यत शुभ्रमभ्रम्॥ ९०॥

विडंबयंस्तुंगतुषारशैलम्
बलाहकोऽनेकसहस्रकूटः।
विनिद्रकुंदस्तवकावदात-
स्तन्वंगि! नन्वेष नभः पिधत्ते॥ ९१॥

---

१ अनुभवनीये। २ यमराजम्। ३ प्रस्फुटितकुंदपुष्पगुच्छवच्छुभ्रम्।

जिनेंद्रचैत्यालयमस्य तुल्यं
कल्याणि! कालेन समापयामः[1] ।
चिराय दैवेन निरूपितोऽस्मि[2]
नेत्राभिरम्यो रचनाविशेषः ॥ ९२ ॥

इति प्रियामालपतैव राज्ञा
परं मुहूर्ताद् ददृशे न मेघः ।
प्रचंडवातोद्धरदंडपात-
व्यापादितोऽखंडशरीरपिंडः[3] ॥ ९३ ॥

तथाऽबुदस्य प्रकृतिं स पश्यं-
श्चैतीचकारेति विरक्तचेताः ।
अनेन बुद्धं विषयेंद्रियाणा-
मशाश्वतत्वं श्रुवता घनेन ॥ ९४ ॥

वपुः स्वभावाशुचि भंगशीलं
निदानमेकं खलु दुष्टदुःखैः ।
तदर्थमात्मानवबोधमूढा[4]
अनात्मनीनं दधति यत्नम् ॥ ९५ ॥

द्विभ्राहसंबंधिनि[5] तावदस्मिन्
देहे दृढप्रेम जनो निबध्नन् ।
गृहीतनिर्मुक्तचिरंतनानां[6]
तेषां पुनर्विसरतीति चित्रम् ॥ ९६ ॥

स्रवन्नवद्वारमशौचपात्रम्
क्षेत्रं वपुर्व्याधिसरीसृपाणाम्[7] ।

---

१ कारयामः । २ दर्शितः । ३ प्रबलपवन एवोद्धरदंडस्तस्य पातेन नाशितोऽखंडशरीरपिंडो यस्य सः । ४ आत्मविवेकमूढाः । ५ द्वयोर्ह्नयाणां वा दिनानां संबंधो यस्य तस्मिन् । ६ पूर्वं गृहीताः पश्चान्निर्मुक्ताः ये; चिरंतनाः पूर्वजन्मसंबंधिनस्तेषां । ७ रोगरूपसर्पाणाम् ।

मूर्खः परं तत्र निबद्धतृष्णो
नाम्नापि तस्योद्विजते विवेकी ॥ ९७ ॥
प्रौढानुरागेण बिभर्ति लक्ष्मीं
नरो गुरूनप्यतिसंदधानः ।
सा वारनारीव नवप्रिया तं
विमुंचति वांछति कंचिदन्यम् ॥ ९८ ॥
भोज्यं हि भुक्तोज्झितमेव सर्वं
जीवेन पूर्वं भववंधभाजा ।
तत्रैव तृप्यन्नविशेषदर्शी
कथं न जिन्हेति जनोऽभिमानी ॥ ९९ ॥
तनूभृतां कर्मविपाकशक्ते—
रवश्यभाव्ये सुखदुःखयोगे ।
कः कस्य बंधुर्यदि वा विरोधी
रागापरागौ यदुपप्लवैते ॥ १०० ॥
यदि प्रयत्नादुभयोपपत्तिः
स शाश्वते वस्तुनि संविधेयः ।
अन्यत्र लग्नस्तु फलावशायी
धुनोति तस्यापगमे पुमांसम् ॥ १०१ ॥
विभावयंतं भवविभ्रमस्य
स्वभावमेवं नृपतिं प्रपद्य ।
निवेदयामास वनस्य गोप्ता
स्वयंप्रभस्यागमनं महर्षेः ॥ १०२ ॥
देवव्रती देव पतिर्यतीना—
मुद्यानमद्याभिगतोऽस्मदीयम् ।
अभूदपूर्वामधिगम्य शोभा—
मन्येव तस्यागमनाद्वनश्रीः ॥ १०३ ॥

१ दूतारयन् । २ वेदया । ३ फलमवशेते उ३५

किंचिन्मरुत्संगचलांगलेखाः
सपुष्पभारा मधुपप्रणादैः[1] ।
लताः स्वयं दर्शितलास्यलीला—
स्तस्यैव गायंति तपःप्रभावम् ॥ १०४ ॥

मुनेरशोकस्य वनप्रवेशे
निवर्हितावद्यमशोकवृक्षाः ।
ध्रुवं समस्कंधदशैव हर्षाद्
व्यंजन्ति रागं नवपल्लवेषु ॥ १०५ ॥

तात्कालिकश्रीप्रभवं मुनींद्रो-
र्गुणं प्रशंसंत इव द्रुमाणाम् ।
आम्रांकुरस्वादविवृद्धदर्पाः
क्वणंति लीलाकलमन्यपुष्टाः[2] ॥ १०६ ॥

यतिप्रभावोपनतेन चूता
वसंतलक्ष्मीनवसंगमेन ।
सरोमहर्षा इव देव ! सर्वे
शाखोल्लसत्कुड्मलभारखिन्नाः[3] ॥ १०७ ॥

तमोमुचस्तस्य गुणप्रकाशात्
महीश ! विस्तारयतो भियेव ।
अन्वेति नरवागतमैकराद्यं
तमस्तमालद्रुमसंनिवेशम् ॥ १०८ ॥

नयन् सलीलं सरसोऽम्बुबिंदून्
पद्मानिवाधैर्भकटात्तगंधः[4] ।
वदान्य ! वन्यद्रुमपुष्पवृंदो
मंदो मरुत् तं गुरुमभ्युदेति ॥ १०९ ॥

१ भ्रमररवैः । २ कोकिलाः । ३ शाखासूल्लसंतः कुड्मलास्तेषां भारेण खिन्नाः । ४ गजकुंभगृहीतगंधः ।

विपाकमाधुर्यभृतो मनोज्ञे-
क्रमास्समासातिशयावरुद्धाः ।
तपोभृता बिभ्रति सौकुमार्यं
जनार्य ! वाचो नववल्लयश्च ॥ ११० ॥

नवोद्गमाः स्थावरजंगमानां
प्रमोदपात्रा यतिसंगमेन ।
रजस्सुगंधि भ्रमरावलीढं
क्षरंति नागा यदि वा मदांभः ॥ १११ ॥

क्षमोपपन्ना व्रततीरनूढा
दृढं वहंतस्सुमनस्समृद्धाः ।
मधुव्रतानां प्रियमुन्नयंति
वनद्रुमा देव ! यतेर्गुणाश्च ॥ ११२ ॥

पिशंगितांगी परितो रजोभिः
पुनांगनूत्यप्रसवाभिवांतैः ।
विभाति साधुप्रणयोत्सवेन
मही महीनाथ ! हिरण्मयीव ॥ ११३ ॥

तपोनियोगाद् यमिनो वनांते
पूगद्रुमान् दर्शयतः फलानि ।
श्लिष्यंति वेश्या इव नागवल्ल्यो
नखक्षतावर्जितपत्रभंगाः ॥ ११४ ॥

१ मनोहरा रचना शैली यासा । उभयत्रापि समम्
नावरुद्धा । अन्यत्र-समास सक्षेप । ३ अचल
५ वल्ली, विवृद्धमानता च । ६ पुष्पाणि, सुष्ठु चेतश्च
च । ८ सुवर्णमयीव ।

यतेरहिंसाव्रतपारगस्य
हिंस्राः समीपे नृप! वैरमुक्ताः।
वसंति संभूय वनद्रुमाणां
छायासु नद्योद्गमवासितासु ॥ ११५ ॥

गोप्तुर्वनस्येति निशम्य वाक्यं
चित्ताधिरूढार्थसमर्थनांगम्।[1]
प्रमोदपीनो नृपतिर्महर्षे—
राकर्णनं दैवमथाभ्यनंदत् ॥ ११६ ॥

पदानि सप्ताभिगतश्च पश्चात्
ससंभ्रमः सांजलिमौलिबंधः।
ननाम तस्मै मुनिपुंगवाय
गुणो हि मुख्यो विनयः प्रभूणाम् ॥ ११७ ॥

सोन्मेषरत्नानि विभूषणानि
स्वयं स्वगात्रादवतारितानि।
अयच्छदुच्चैर्वनपाय राजा
दानोत्तरा मानवतां हि तुष्टिः ॥ ११८ ॥

स घोषणाव्याकृतपौरलोकः
शुंडालमारुह्य मदार्द्रगंडम्।
प्रस्थानभेरीरवपूर्वयातं
बहिः पुरोद्यानवनं जगाम ॥ ११९ ॥

तस्मिन्नशोकद्रुमचारुशाखा—
लतांचितस्फाटिकभूनिषण्णम्।
विद्यामृतस्वादविवृद्धमान—
हर्षप्रकर्षादपि भाऽविषण्णम् ॥ १२० ॥

---

1 मनस्थितवैराग्यसमर्थकम्

धर्मस्य सर्गमिव देहमिव क्षमाया
मोहस्य भंगमिव संघमिव व्रतानाम् ।
दृश्यं प्रकाशमिव तत्त्वधियो दयाया
मूर्तप्रयोगमिव सार्थमिवागमानाम् ॥ १२१ ॥

यतिपतिमवलोक्यानेकपाद् दूरदेशे
क्षितिपतिरवतीर्णस्तूर्णमुद्वेलहर्षः ।
सविनयमुपगम्य क्ष्मातलघ्रातचूडा-
मणिरगणितलक्ष्मीः साधुवंद्यं ववंदे ॥ १२२ ॥

आनीतं स्वनियोगवर्तनपरैः कर्मांतिकैस्तत्क्षणा-
दाक्षिप्यामलतेजसा यमवतामाज्ञात-मप्यासनम् ।
प्रौढाकृत्रिमभक्तिनिर्भरतया पृष्ठे भुवस्तिष्ठता
पपृच्छ मुनिरुच्चकैः क्षितिभुजा स्वाकृतमुद्धश्रिया ॥ १२३ ॥

इति श्रीवादिराजसूरिविरचिते श्रीपार्श्वजिनेश्वरचरिते
महाकाव्ये स्वयंप्रभागमनं नाम
द्वितीयः सर्गः ।

---

१ प्रशस्तलक्ष्मीवता ।

## तृतीयः सर्गः

भवतापनिदाघपीडितं
भवता नाथ मनश्चिराय नः।
अमृतद्युतिनेव नेत्रयोः
परिलब्धेन भृशं प्रमोदते ॥ १ ॥

धुतसंतमसं रजो वमत्
सविकाशद्युति सत्पथोन्मुखम्।
तव संनिधिनाऽभवन्नृणां
हृदयं पद्ममिवाहिमद्युतेः ॥ २ ॥

विषयव्यतिषंगनिस्पृहं
चरितं ते दुरितप्रमार्जनम्।
अवयन्नवसानपेशलं
सहृदाह्लादमुपैति मानवः ॥ ३ ॥

स्वपराघनिबर्हणं बला-
दसिधाराक्रमणोपमक्रमम्।
विरलाः खलु ते भवादृशा
नियमं निर्मलमुद्वहंति ये ॥ ४ ॥

मलिनानवलोकते जनो
जगदुद्योतकृतो भवद्गुणान्।
अविवेकतमा मलीमसान्
रविरश्मीनिव तामसद्विजः ॥ ५ ॥

---

१ चंद्रमसा। २ सूर्यस्य। ३ जानन्। ४ खड्गधारो परिगमनमिव कठिनमित्यर्थः। ५ राहुः।

मतिसिंधुरियं तनूभृतां
श्रुतिनिम्नस्थलपातिता त्वया।
अनुधावति केवलार्णवं
गुरुरत्नैरखिलैरलंकृतं ॥ ६ ॥
तव दृष्टिरभव्यदुर्लभा
भगवन्नद्य पुनर्मया श्रिता।
अधिकं मम वक्ति भव्यतां
सुलभा भव्यतया हि निर्वृतिः ॥ ७ ॥
तदहं स्वहितोऽपि सांप्रतं
सचिवप्रश्नविदिच्छलोद्यतः।
श्रवणामृतशीकरोद्गिरं
गिरमाकर्णयितुं यते! यते ॥ ८ ॥
कमठस्य गवेषणे गतो
मरुभूतिः स विलंबते कुतः।
क्रमते खलु दिव्यमव्ययं
तव चक्षुर्विषयेऽप्यतींद्रिये ॥ ९ ॥
मितमित्यभिधाय भूपतो
विरते स्थंडलशायिनां पतिः।
अवधिप्रतिपत्तिगोचरम्
तमुवाचार्थमनर्थपीडनम् ॥ १० ॥
दशनप्रभया तपोभृतः
प्रतिविद्धा शरदभ्रशुभ्रया।
नृपलोचनयोरभूदिव
स्वविशुद्ध्या विषया सरस्वती ॥ ११ ॥

१ प्रश्नोक्ष । २ कर्णामृतवर्षिणीं । ३ अविनाशि । ४ व्रतिना ।

इदमात्महिताय बोधितं
तव दैवेन नरेंद्र ! धीमताम् ।
कथमप्यवधेयवस्तुनि
प्रतिपित्सां कुरुते हि भव्यता ॥ १२ ॥

सचिवस्तव निर्विचारतः
सहजप्रेमनियोगतो गतः ।
शिखरे नृप ! भूतभूभृत—
स्तपसि व्यग्रमपश्यदग्रजम् ॥ १३ ॥

धृतशोकरयः स पादयो—
र्निपतन् बाष्पनिरुद्धलोचनः ।
अशृणोदतिरोषभीषणं
मुनिखेटस्य वचोऽग्रजन्मनः ॥ १४ ॥

भवता निगृहीतगौरवाः
कथमप्युद्धरिता ममासवः ।
अधुना पुनरंग ! तानपि
स्वयमुच्छेत्तुमिहागतो भवान् ॥ १५ ॥

इति निष्ठुरमुच्चरन्क्रुधा
कमठो धरणिध्रउपात्तया ।
शिलया सचिवस्य मस्तकं
प्रणतस्यैव चकार जर्जरम् ॥ १६ ॥

प्रविमुच्य कलेवरं दृढ—
च्छिलया तस्य विभिन्नमस्तकम् ।
सहसा समसंतरात्मना
प्रपलायंत भयादिवासवः ॥ १७ ॥

१ संपदर्थो । २ शिलया । ३ दुर्मुने । ४ प्राणाः ।

अथ कुंजरशैलनिर्झरो—
चलदच्छांबुविवर्द्धितद्रुमम्।
मलये नृवर ! प्रतीयता—
मनुवेगावति सल्लकीवनम् ॥ १८ ॥

जटिलैः परिवीतवल्कलाः
स्थिरशाखाश्चलदंतपंक्तय.।
तरव. सवयोविवृद्धयो
विदिता यत्र तपोभृतोऽथवा ॥ १९ ॥

निजचापलतारनिस्वना
नवजीवापसरच्छिलीमुखा.।
कुसुमस्तवकध्वजोद्वहा
रणधुर्या इव यत्र शाखिनः॥ २० ॥

अतिसर्गनिसर्गसौरभं
करिभग्नं खलु यत्र चंदनम्।
अनुशोचति निश्वसन्नली
न रसज्ञस्य गुणो न तादृश. ॥ २१ ॥

सुषिरस्थशकुंतसंतत-
ध्वनिभिर्यद्वनशाल्मलीकुजै.।
व्यथयेव विरुद्यते मरु-
चलशाखाशितकंटकाहते. ॥ २२ ॥

वनदंतिमदाबुवासिता
वितता यद्विपमच्छदाश्चिरम्।
कुसुमेषु तदीयसौरभं
द्विगुणं बिभ्रति भृंगपेशलम् ॥ २३ ॥

---

१ जटा केशा येषा सतीति। सघनाश्च। २ चलाश्चचला दताना येषा। चलतश्चाते मध्ये पक्तयो येषा। ३ बाणा। भ्रमराश्च।

यदनेकविधैरनोकुहै—
निबिडं भूरिजरल्लतावृतैः।
श्रुतिरम्यरवाश्शिलीमुखा
निविशंते न परे गुणच्युताः ॥ २४ ॥

सुरभिर्नवपल्लवास्तरा
सवया यद्वनचंदनावलिः ।
परिरम्यतयेव भोगिभि—
र्नवनागैः समदैस्तु भज्यते ॥ २५ ॥

नववाणयुताः कुजातयो
विकटाक्षा विकलाः पलाशिनः ।
प्रतिबिभ्रति सत्पथोर्गति
तरवो यत्र न वन्यमानवाः ॥ २६ ॥

वितनोति षडंघ्रये भृशं
प्रमदं यस्य सदा नता लता ।
सुरभिप्रसवाऽथ दंतिना—
मपि भूनाथ ! सदानताऽलता ॥ २७ ॥

तिलकांकितगंडभित्तयो
नखरन्यासखरप्रहारिणा ।
हरिणाऽपसरंत्यधिष्ठिताः
पृथुशैला इव यत्र कुंजराः ॥ २८ ॥

समदैर्द्विरदैर्निपातिता—
स्तरवो यस्य निरुंधते पथः ।
सरला ननु मार्गविप्लवः
स्थितिभङ्गकचित्तं विधीयते ॥ २९ ॥

---

१ भ्रमराय । २ मिहेन । ३ सरलवृक्षाः ।

निशि यत्र भुजंगमः स्फुरन्
मणये तत्किरणोपदर्शितः ।
शबरैर्विचरन्नियुज्यते
धनिता हि क्वचिदंग ! भृत्यके ॥ ३० ॥

ज्वलितेषु वनांतशायिभि—
र्निशि यस्मिन् दहनेषु चंदनैः ।
प्रविमुच्य ससौरभं तरुं
तमथोद्देशमटंति षट्पदाः ॥ ३१ ॥

विवृताजगरास्यगह्वरं
प्रविशन्नद्रिगुहाधिया द्विपः ।
ध्रुवमंचेति यत्र पंचतां
ननु मिथ्यात्वमनर्थकारणम् ॥ ३२ ॥

शबराः स्वयमुत्खनंति यद्
वसुधायां लवलीरनुत्तमाः ।
लघुकोद्रवसस्यवृद्धये
न हि वन्येषु गुणज्ञता गुणः ॥ ३३ ॥

बहुमूलधनं पिधायकं
पृथुरोधो जघनस्य बिभ्रती ।
विमलांबुदुकूलमायतं
सुतरंगावलिहंसलांछनम् ॥ ३४ ॥

परिपुष्पयोभिरर्जितं
जननीवाखिलबालशालिनः ।
ऋजुवृत्ततया क्रमोन्नतो
घटयंती तटतल्पशायिनः ॥ ३५ ॥

---

१ मणिदीप्तिदर्शित । २ भ्रमरा । ३ प्राप्नोति । ४ मृत्यु । ५ श्रेणा ।

त्वरयेव सवेगनिस्वना
चलितुं भर्तृसमीपमुद्यताः ।
तरलांगतरंगपाणिभिः
कृषती तीरलताः सखीरिव ॥ ३६ ॥

अभितस्तटमंबु सल्लकी—
तरुनिर्य्यासकषायितोद्दरम् ।
प्रतिपूर्यं वहत्यनारतं
विषमा वेगवती च यन्नदी ॥ ३७ ॥ कुलकम् ।

शुभलक्ष्मसमूहसंभृतः
समभूत् तत्र महागजो गजः ।
प्रथितः पृथिवीतले भृशं
पृथिवीघोष इति प्रभाषितः ॥ ३८ ॥

सविभागशरीरभागपि
प्रवलप्रेमतयैकतां गता ।
सदृशी सुरभर्तुरभ्रमो-
रभवत्तस्य वशाऽपि वर्वरी ॥ ३९ ॥

मरुभूतिरपास्य जीवितं
मनसार्त्तेन विवेकमूढधीः ।
उदिते स तयोर्घनांतरे
पविघोपाह्वयनंदनोऽजनि ॥ ४० ॥

चटुपाटलपुष्करोदरः
स विरिंखन्निजचिंकलीलया ।
पितरौ सुतराममूमुदत्
सजलस्निग्धघनाघनच्छविः ॥ ४१ ॥

---

१ ऐरावतस्य । २ स्खलितगतनासिकाया लीलया ।

वपुषा किमपि प्रपुष्यता
स पितुः पीतवयास्समीपगाः ।
गिरिराजसमीपवर्त्तिनी—
महरद् गंडशिलोच्चयश्रियम् ॥ ४२॥

कलमेन मदोल्लसत्कटाः
स्वयमुद्भिन्नविषाणकोटिना ।
अभवन् प्रतियोद्धुमक्षमाः
करिणस्तेन करालतेजसा ॥ ४३ ॥

अधुनाजवने प्रवर्त्तिते
वयसि प्राप्य स यूथनाथताम् ।
वपुषा विपिनं विभूषयन्
गिरिणेव स्थिरतामुपेयुषा ॥ ४४ ॥

वनविभ्रमणोद्भवश्रमः
स्फुटमध्यंदिनसंधिवेलया ।
करिणीभिरमाऽवगाहते
स हि तालंद्वयसं सरिज्जलम् ॥ ४५ ॥

करकीर्णमुदस्य भूतलाद्
घनकर्पूरपरागमुद्वहन् ।
अवतारमिवेंद्रदंतिनः
प्रथयत्येष वनाधिवासिताम् ॥ ४६ ॥

स्वयमभ्यवहारशेषितं
तरुपंडादवकृष्य पल्लवम् ।
अनुरागमिव स्वधेनवे
स भृशं यच्छति पाटलच्छविम् ॥ ४७ ॥

---

१ सह् । २ प्रमाणे द्वयसट् ।

प्रतिवाति वनांतवल्लरी—
कुसुमामोदिनि मंदमारुते ।
स नदीपुलिनाभिसंश्रयो
निशि निद्रासुखसिद्धिमृच्छति ॥ ४८ ॥

अनुजस्य वधेन तापसैः
कुपितैराश्रमतो बहिः कृतः ।
कमठोपि किरातगृह्यतां
निजचेष्टासदृशीमपद्यत ॥ ४९ ॥

नगरे क्वचनारिसायके—
र्निहतो गोग्रहणे स लुब्धकैः ।
असुभिर्निरमुच्यत प्रियै—
रपि दुष्कर्मकृतो न बंधवः ॥ ५० ॥

अजनिष्ट स पापचेष्टितो—
सूनुन्मुच्य राजप्रियावने ।
कृकुवाकुफणी पुराकृतं
ननु काले नियमेन पच्यते ॥ ५१ ॥

पतिपुत्रवियोगदुःखिता
परिहृत्यैवमसूननुंधरी ।
खलकर्मविपाकदोषतो
विपिने तत्र बभूव मर्कटी ॥ ५२ ॥

नृप ! तत्र कषायरंजितं
प्रविधेयं विदुषा निजं मनः ।
रिपुरस्ति कषायसंनिभो
न परस्संततदुःखलंभनः ॥ ५३ ॥

---

१ नदीतटाश्रितः। २ प्राप्नोति। ३ शबरपक्षतां। ४ वानरी। ५ सर्वदा दुःखकारी।

अविरस्य यथेष्टमाचर—
न्नुपचित्याशुभकर्मपुद्गलान् ।
परिपक्करसाननुपालिह—
न्ननु शेते भृशदु:खितो जन: ॥ ५४ ॥

विनियम्य मनो जिनेश्वरे
विदधन् साधुसमाधिभावनाम् ।
दृशतां नय पंचपवण:
परिणामान्नृप ! बंधघातिन: ॥ ५५ ॥

इति तस्य निशम्य शंसितं—
बलमुख्यस्य मुखोद्गतं वच: ।
प्रभुरभ्यमनायत क्षिते—
स्तपसे भीतमना भवभ्रमात् ॥ ५६ ॥

अजिनेश्वरसौख्यकारणं
प्रतिबोध तमबाधया धिया ।
विषयोपनिपातसंभवा
प्रतिबद्धं प्रभवो न भुक्तय: ॥ ५७ ।

अभिषिच्य नरेंद्रमात्मन—
स्तनयं राज्यधुरे नराधिप ।
स तपोधुरमग्रहीद् यथा—
विधि तस्यैव मुनेरनुज्ञया ॥ ५८ ॥

परिहृत्य बहिर्विभूषणं
मणिहारांगदकुंडलादिकं ।
ग्रतरत्नमयं पुनर्दधे
स वरं मुक्तिवधूविलोचनम् ॥ ५९ ॥

---

१ सगृह्य । २ कथित । ३ विलोक्यति दर्शयतीति तत् ।

अधिगम्य पुनर्विनिर्णयं
स्वयमंगेषु स तीव्रसंयमः ।
गुणगौरवमूलमुच्चकै–
रवधिज्ञानमवापदद्भुतम् ॥ ६० ॥

चिरमुग्रतया तपश्चर–
न्नवधिज्ञानमयेन चक्षुषा ।
अवशेषमपश्यदायुषः
स निजं द्वादशवर्षसंश्रितम् ॥ ६१ ॥

परिहृत्य गुणी गणान्वयं
विदधानः पुनरात्मसंस्क्रियां ।
जिनचैत्यगृहान् विवंदिषुः
सह सार्थेन ययौ दयानिधिः ॥ ६२ ॥

शिविरे वणिजां निवासिते
सति तस्मिन्नवसल्लकीवनम् ।
समया समयातिभीतिमान्
क्वचिदाशिष्ट शिलातले यमी ॥ ६३ ॥

विनयावनतानतामसः
शशिगुप्तप्रमुखान् वणिग्वरान् ।
मलकर्दममर्दनक्षमा–
मशिषद् धर्मकथां यथागमम् ॥ ६४ ॥

मरुभूतिचरः करी तदा
पविघोषो मदमेदभीषणः ।
जनघोषनिपीडितश्रवाः
कृतकोपः शिबिरांतकं ययौ ॥ ६५ ॥

---

१ समीपे ।

त्वरया गिरिराजसंनिभः
स निवेशे वणिजां समभ्रमत् ।
क्षुभितार्णवतोयदुःस्थतां
कृतभीतिर्जनसंहतिर्दधौ ॥ ६६ ॥

भयनुन्नतया समुच्चरन्
ककुवंत जनताध्वनिर्ययौ ।
वसुधोद्वहनाय दीक्षितान्
स्वयमाक्रष्टुमिवाष्टदिग्गजान् ॥ ६७ ॥

अशमी समवर्तिनो वपुः
कुपितस्य प्रथयन्निव द्विपः ।
शिबिरं निजघान घस्मरः
करदंतप्रमुखैर्निजायुधैः ॥ ६८ ॥

मनुजं मनुजेन गां गवा
हयमश्वेन लुठन् स निष्ठुरम् ।
अवधीदवधौ निजायुषां
ननु तत्तस्य वधाय साधनम् ॥ ६९ ॥

सुभटस्य समुत्क्षिपन् वपु-
र्निहितस्य स्वकरेण सत्पथे ।
इयतीति पराक्रमोन्नति—
र्गुणयस्य स्वयमब्रवीदिव ॥ ७० ॥

नभसि प्रहिता नगवल्ली
द्विरदंतस्य करेण सक्षता ।
रुधिरेण सिषेच भूयसा
निजमन्युप्रचयोपमाभृता ॥ ७१ ॥

१ यमस्य । २ भक्षणशील । ३ स्वक्रोधसमुदयतुल्येन ।

अवलंब्य करेण पादयोः
क्षितिपृष्ठे रदिना निपीडितम् ।
शतधा विभिदे नृणां शिरो
न निकारार्तिसहोत्तमांगता ॥ ७२ ॥

अभजन् गजदंतकीलिता—
स्तुरगाः शोणितशोणमूर्तयः ।
शशिकोटिविदारितोरसो
नवसंध्याजलदस्य विभ्रमम् ॥ ७३ ॥

विनिकृत्य रुषा तनूभृतां
प्रविकीर्णेषु शिरस्सु दंतिना ।
बहुदिग्मुखता स्वयं दधे
सभियेव प्रपलायितुं भुवा ॥ ७४ ॥

इति भूमिविहायगोर्वधे
द्विरदे तन्वति सार्थवासिनाम् ।
रुधिरप्रवहा तरंगिणी
वनभूमावुदपादि भूयसी ॥ ७५ ॥

मदसौरभलोभविभ्रमद्—
भ्रमरालीकलदीर्घझंकृतम् ।
निजविक्रमकीर्तनोपमं
स विशृण्वन् विपरीतवेदकः ॥ ७६ ॥

स हि तांत्रकरालनिर्गमं
नृगवंधं परिवासितात्कृतिम् ।
प्रविधूत्य करेण विभ्रम—
न्नुपतस्थौ यतिपुंगवं द्विपः ॥ ७७ ॥

---

१ रुधिररक्तशरीराः । २ चंद्रकिरणविस्फारितोरगः । ३ मिथ्याज्ञानी ।

मुनिराजविलोकनक्षण—
प्रतिबुद्धेतरजन्मसंस्क्रियः ।
तमबुद्ध स पौदनाधिपं
मरुभूतिं स्वमपि द्विपाधिपः ॥ ७८ ॥

प्रतिबुद्धमना भवस्थितौ
स विनिर्दग्निजकर्म निर्मदः ।
प्रणनाम मुनींद्रपादयो—
र्गुरुशोकोद्गतबाष्पलोचनः ॥ ७९ ॥

पृथुभीतिपलायिता जनाः
पुनरभ्येत्य सबालयोषितः ।
अरविंदमुनींद्रसंनिधौ
सुचिरं तस्थुरवेक्ष्य विस्मयम् ॥ ८० ॥

अवधिं प्रणिधाय संयमी
मरुभूतिं प्रतिपद्य तं गजम् ।
कृपया क्षिपकर्मलाघव-
प्रहितो वाचमवोचदीदृशीम् ॥ ८१ ॥

कुशलं तव भद्र ! किं पुनः
स्मरसि व्यक्तमिभेंद्र ! पौदने ।
सचिवस्त्वमहं च भूपति—
र्ननु वत्स्याव इमौ मिथः प्रियौ ॥ ८२ ॥

अनुरागवशीकृतो भवान्
मतमस्माकमुदास्य यद्गतः ।
फलितं तव तेन कर्मणा
मृगजन्मेदमधोचिते रुषा ॥ ८३ ॥

हतवर्त्तिपधाय मानसं
तिमिरं तत्परिमार्जनं वचः ।

गुरुबंधुजनोपदर्शितं
कथमुल्लंघ्यमतो हितैषिणां ॥ ८४ ॥

मदमुग्धमिदं क्व जन्म ते
क्व पुनर्मैत्रिपदं महोदयम्।
सुघटीकुरुते हि दुर्घटं
ननु कर्मानवबोधबृंहितम्॥ ८५ ॥

अवधेयमिदं ततस्त्वया
जिनधर्मादपरं न जन्मिनाम्।
भवदुःखनिबर्हणक्षमं
सुखयत्नोपनतं निरूप्यते ॥ ८६ ॥

सुखमिच्छुरुपायहे रुचिं
जिनतद्वागभिधेयवस्तुषु।
भवसि त्वमनेन कर्मणा
गज! सम्यक्त्वसमृद्धमानसः ॥ ८७ ॥

मलपंचकवर्जितद्युतिं
दृढसम्यक्त्वमयं महागुणम्।
गजरत्न! जगत्रयीशिखा—
मणिता ते दधतो भविष्यति ॥ ८८ ॥

जिनपुंगवपादपद्मयो—
स्तनु भक्तिः शतमन्युमान्ययोः।
दुरितद्रुमपंक्तिपाटने
भवतः सैव परश्वधायते ॥ ८९ ॥

कुरु कुंजर! मानसे रतिं
दृढसम्यक्त्वमरालराजिते।

---

१ पंचातीचाररहितम्। २ इंद्रः।

त्वमणुव्रतपद्मसद्मनि
प्रियपुण्यांबु निगाह्य पीयताम् ॥ ९० ॥

जहि कोपमपायकारणं
जहि प्रौढांगदमं मदोद्धतिम् ।
गजराज ! जहीहि तत्सर
त्वममैत्रीं च जहाहि देहिभिः ॥ ९१ ॥

इति तत्त्वविदो वचोऽमृतं
प्रतिजग्राह पुरो महागजः ।
विकसत्करपुष्करेण तं
पुनरानर्च निपत्य पादयोः ॥ ९२ ॥

अभिनंद्य गते मुनीश्वरे
प्रति संमेदमसंगया गिरा ।
तमुदीक्ष्य करी स तस्थिवान्
सुचिरं तद्विरहाभिदुःखितः ॥ ९३ ॥

अविलंब्य मुनिक्रमांबुजं
भ्रमरीभूय गते स्वमानसे ।
अमनस्क इव न्यवर्तत
स वने वन्यकरेणुवल्लभः ॥ ९४ ॥

वनकुंजरयूथवाहिते
पथि निर्जंतुतया स पावने ।
विजहार विलोक्य वासरे—
प्यचलः सच्चलोपमो निशि ॥ ९५ ॥

उपवासपरंपरावधे—
रनसूयन् वनदंतिजातये ।

१ सम्मेदाचलम् ।

करणद्विपदर्पसातनं
विदधे साधु स भव्यकुंजरः ॥ ९६ ॥

क्षुधितोऽपि कृपागुणान्वयात्
स्वयमच्छिन्नवनद्रुमांकुरः।
दुरघांकुरसंघमक्षिणो—
न्नियमायामिकरेण वारणः॥ ९७ ॥

महनद्विपखंडितोज्झितै—
र्मितवृत्तेर्गुणपुष्टिमिच्छतः।
चत तस्य करीरपल्लवै—
स्तनुरीर्ष्याभृदिवाभवत्तनुः ॥ ९८ ॥

रुचिराजनसुप्रतीकतां
दधदाध्यायदनुज्झितादरः।
जिनराजमरालभूषणं
*गुणहैम्याचलगं स मानसम् ॥ ९९ ॥*

गजयूथगृहीतशेषितं
जलमच्छं स निपातुमिच्छया।
उपशल्यसमृद्धकर्दमं
विजगाहे गहने जलाशयम् ॥ १०० ॥

नियमैः कृशतांगमक्षमं
चलितुं गाढमुदस्य कर्दमम्।
तनुखंडगतः स दृष्टवान्
गजराजं कृकवाकुपन्नगः ॥ १०१ ॥

अभिपत्य स पूर्वया रुषा
नयनाभ्यां विषवह्निमुद्वहन्।

---

१ गजः।

विददंश गजस्य मस्तकं
न नृशंसस्य दयास्ति साधुषु ॥ १०२ ॥

असहिष्णुरवेक्ष्य मर्कटी
मरणं पुत्रचरस्य पन्नगम् ।
निजघान निपात्य दुस्तर
दुरितं तद्भव एव पच्यते ॥ १०३ ॥

उपपत्य फणी स पंचमे
नरके षोडशसागरोपमम् ।
अशुभोदयजातवेदना-
फलमश्नन्नशयिष्ट दुष्टधीः ॥ १०४॥

विषवेदनयाऽनुधाविता
मतिभृंगी सहसा विषाणिनः ।
जगदेकशरण्यमर्हत—
श्चरणाब्जं शरणं भयाद् ययौ ॥ १०५ ।

अवमर्षसुधानिषेकतः
स्वपरध्वंसिशरीरनिस्पृहः ।
स समाधिमभव्यदुर्लभं ।
विषवेदाव्यतिस्म सिंधुरः ॥ १०६ ॥

प्रणिधाय पुरः स शंफली—
रिव पंचापि गुरुस्तवक्रियाः ।
दिविजश्रियमुद्धिरन्पुन—
र्विषविद्धां विजहौ जरत्तनुम् ॥ १०७ ॥

कृतपुण्यतया न शुद्धदृक्
न महाशुक्रमुपेयिवान् दिवम् ।

---

१ गजस्य । २ ज्ञानं । ३ प्राप ।

अभवत् स पतिः स्वयंप्रभ—
प्रथिताख्यानविमानसंपदाम् ॥ १०८ ॥

स मुहूर्त्तसमग्रयौवनां
तनुमिद्धां शयनोपपादिताम्।
अवहन्नवदीप्यषोडशा—
भरणाभिद्युतिपिंडगर्भिताम्॥ १०९ ॥

नवरत्नमरीचिमेचके
शयनीये स निषेदिवान् क्षणम्।
प्रचुराब्धितरंगगंगिन—
स्तपनस्यानुचकार भास्वरः ॥ ११० ॥

स विमानगृहाद् विनिस्सर—
न्नमरैर्दुंदुभिनादबोधितैः।
जयकारनिरुद्धदिङ्मुखै—
र्ददृशे सांजलिबंधमस्तकैः ॥ १११ ॥

अधिरोप्य महत्नपीठिकां
स्नपितस्सन् मुधया सुधाशनैः।
त्रिदशाद्रिनदस्य संदधे
श्रियमिंदुद्युतिमध्यवर्त्तिनः ॥ ११२ ॥

निपतत्कुसुमावलिच्छलान्
स्वयमेवं प्रतिनूतनश्रिया।
सविलासमुदाम्यत ध्रुवं
धवलस्निग्धकटाक्षपद्धतिः ॥ ११३ ॥

वनितामुखचंद्रमंडल—
क्षरदालोकरयच्छदामृतैः।

१ मुखस्य। २ देवैः।

परिपेक्रुवती बभूवतुः
थवसी तस्य चिराय सार्थके ॥ ११४ ॥
विधूनात्मविभूतयोऽमराः
प्रभुसेवा समवायिनोऽवैरे ।
अमृतोदधिवीचिविभ्रमं
न विबभ्रुर्न विधूतचामरैः ॥ ११५ ॥
परिवृत्य तमीश्वरं मुदा
मधुरं गायति किंनरीगणे ।
अपरोपनतानभिज्ञया
सुमनैस्यप्यमनस्कताऽभवत् ॥ ११६ ॥
मददिग्धकपोलसौरभा—
गतकल्पद्रुमपुष्पषट्पदाः ।
गजरूपतया विकृत्य तं
प्रभुमेके द्विविजाः सिषेविरे ॥ ११७ ॥
अनुबंधिनमन्यजन्मनो
नियमक्लेशमिवास्य मुष्णता ।
चमरीरुहभारभामिनी—
निकरेण प्रभुरभ्यवीज्यते ॥ ११८ ॥
कनकांबुरुहेषु भृंगनि—
ध्वनितम्रेडितकिंकिणीरवाः ।
ननृतुः रसभावपेशलं
प्रियमस्योपनिनीषव· स्त्रिय· ॥ ११९ ॥
व्योमध्वजैरनवशेषमभूत् पिनद्धं
नानाविमानशिखरोच्छ्रितरत्नदंडैः ।

१ आकाशे । २ पुष्पे । ३ द्विगुणीकृता । ४ व्याप्त

दिग्भित्तयः सुकृतिनो जनने समंताद्
गंभीरदुंदुभिरवैः स्फुटिता इवासन् ॥ १२० ॥

पश्यन् स वैभवमिदं सविचारचेताः
प्राप्यावधिं भवनिमित्तमुपेत्य धात्रीम् ।
हेमारविंदनिवहैररविंदमुंच—
रानर्च तच्चरणपातितरत्नमौलिः ॥ १२१ ॥

विविधकुसुमवर्गैः प्राच्यमभ्यर्च्य देहं
सपदि सुकृतवेदी स्वर्गमभ्युज्जगाम ।
मुकुटमणिमयूखैरुल्लिखन्नभ्रकूटे—
ष्वभिविलसदखंडामर्त्यकोदण्डलक्ष्मीः ॥ १२२ ॥

आख्यां शशिप्रभ इति प्रथितां दधानो
देवः स शोणशतपत्रपलाशलेश्यः ।
मासार्धके सुरभिनिश्वसितैकवृत्तिः
स्वर्गे बभौ चतुररत्निवपुःप्रमाणः ॥ १२३ ॥

भोक्ता वर्षसहस्रषोडशतया दिव्यामृतस्याप्सर—
स्तोमालिंगनलब्धरम्यपरमप्रीत्युद्गमश्रीनिधिः ।
तस्थौ दिव्यवधूकटाक्षनिपतन्नेत्रद्विरेफावली—
नित्यासेव्यमनोज्ञमूर्तिसुमनाः स्वर्गेद्विरण्यार्णवान् ॥ १२४ ॥

इति श्रीवादिराजसूरिविरचिते श्रीपार्श्वजिनेश्वरचरिते
महाकाव्ये वज्रघोषस्वर्गगमनं नाम
तृतीयः सर्गः ।

---

१. षोडशसागरप्रमाणायुःपर्यंतं ।

# चतुर्थः सर्गः ।



प्रवृद्धजंबूद्रुममुख्यलांछन—
    प्रभावितद्वीपविशेषमध्यमः ।
निसर्गहेमच्छविमंडलोदरः
    स्थिरस्वभावोऽस्ति सुमेरपर्वतः ॥ १ ॥

समंततो यः प्रभयावगाहते
    नभःप्रदेशांस्तपनीयपिंगया ।
जिनार्भकस्नानपयोरसाप्लुतः
    सदा वियर्द्धिष्णुरिवावतिष्ठते ॥ २ ॥

विभर्त्ति यः स्वर्वनितावितर्त्तनं
    नवस्वभावं सुरतालसंगतम् ।
गुहागृहेष्वप्सरसामपि व्रजं
    प्रियांकशय्यासु रतालसं गतम् ॥ ३ ॥

पयोधरैर्भ्रंशितशुभ्रदंशुका
    विभक्तमूलागतहस्तविक्रिया ।
वधूरिव प्रेमवती दिनात्यये
    यदंगमालिंगति तारकावली ॥ ४ ॥

स्थिरप्रकृत्या जगति प्रतीयते
    नितांतमाक्रांतमरुत्पथोऽप्ययं ।
रसातलस्थोऽपि दिविस्पृगुच्चकैः
    रविस्वभावोऽपि सुवर्णसंभवः ॥ ५ ॥

---

१ सुवर्णवत् । २ देवाना तालेन सहितं । ३ रतेनालसभाव प्रा ४ पयोधरो मेघ स्तनश्च । अशव किरणा, अशुक वस्त्र च । ५ व्याप्ताक इति परिहार । ६ अचल ।

सुरद्रुमच्छायसुखेषु सानुषु
प्रकृतगीतं सुरसुंदरीगणम्।
करोति यस्तं मणिरश्मिभूषितं
गुणो हि नन्वेष रसावगाहिनः॥ ६॥

अनोकहा यन्मणिशृंगशेखरा
नभोऽधरुंधंत्यरुणप्रभोद्गमे।
अनारतं बिभ्रति पर्णसंहतीः
प्रवालभावानतिवर्त्तिनीरिव॥ ७॥

पतत्रिणां यत्र जलाशयोद्भवं
न पुंडरीकावृति पांडुकंबलम्।
तनोति न श्रीजिनराजमज्जनं
शिलातलं बिभ्रति पांडुकं वलम्॥ ८॥

विवेकचारी विषयेषु मध्यमः
समस्तशाखाभृदवाप्तसत्पथः।
प्रपद्य यः स्वभ्रतया तनूभृतां
व्यनक्ति विद्वानिव लब्धवर्णताम्॥ ९॥

महीरुहो दंतदभीषुमंडल—
प्रकाशितव्योमगृहोदराश्रये।
नितांतमंधंकरणं शरीरिणां
न यत्र रात्रावपि जृंभते तमः॥ १०॥

चकास्ति नित्यं विषयोऽस्य भूभृतः
पुरो विदेहे महनीयवैभवः।
जिनेश्वरश्रीमुखनिर्गतं वचो
यमाख्यया शंसति पुष्कलावतीम्॥ ११॥

उदक्तटं मंडयति स्वभूगुणै—
श्चिराय सीतासरितो निवासभूः।

नभश्चराणां कुमुदार्जुनच्छवि—
विभाति तस्मिन् विजयार्द्धपर्वतः ॥ १२ ॥

यदि त्रिलोकोदरभांडसंभृतः
स्थिरैकराशिर्धवलो गुणो भवेत् ।
स्वरश्मिभिः प्रोन्नमितांवराशयः
स तस्य लीलां भृशमुद्वहेत् गिरेः ॥ १३ ॥

वभूव तस्मिन् घनवर्त्मचारिणां
प्रभुस्त्रिलोकोत्तमनामविश्रुतः ।
पुरस्य गोप्तायमनुश्रवान्विता
वदंति वेगं खलु विद्युदांढिमम् ॥ १४ ॥

अमूल्यरत्नोज्ज्वलमौलिमंडनो
विहारसौख्याय चरिष्णुरंवरे ।
घने निशीथेऽपि तथा न पश्यतां
स विस्मयं यः स्वरदीधितां धियम् ॥ १५ ॥

अनन्यसाधारणसिद्धविद्यया
दुरासदः संयति वीरविद्विषाम् ।
इरंमदं वारिमुचीव पांडुरे
गिरौ प्रतापं प्रथयांवभूव ॥ १६ ॥

अनेकधा यस्य चकार संगता
समुत्सवादानमहीनभोगता ।
जगत्युपापद्यत कीर्त्तिवल्लरी
समुत्सवादानमहीनभोगता ॥ १७ ॥

यदृच्छयापि स्त्रीषु सहार्थियोवनं
न्यवुद्ध विद्युत्पदपूर्वमालया ।

---

१ निखिलभोगत्वम् । २ मही-पृथ्वी नभ-आकाश तत्र व्याप्ता ।

अनेकवल्लीसमवायि नंदनं
सुकल्पवल्ल्येव विभाति भूपितम् ॥ १८ ॥
प्रविश्य तन्मानसमंगजद्विपः
कदर्थयामास वली नभश्चरः।
निपीड्य तत्कुंभधिया प्रियाकुचौ
स नूनमाश्लिक्ष्यदलक्षितांतरम् ॥ १९ ॥
स यौवनोत्सेकवनप्रभावुक--
स्मराख्यदावाग्निविदाहवेदनां।
पिबन् प्रियामुग्धमुखेंदुमंडल--
स्फुटाधरोग्रामृतसारमुज्जहौ ॥ २० ॥
इति प्रियावल्लभयोस्सुचित्तयो--
र्बभूव पुत्रः शुभकर्मचित्तयोः।
स यं समाख्याति शशिप्रभामरं
दिवश्च्युतोऽवाप्य यशः शुभामरम् ॥ २१ ॥
स जातमात्रो यदवापि वान्वितो
जवेन विश्वान् गुणरश्मिभिर्गुणी।
ततः समाख्यायत रश्मिवेग इ--
त्यभिख्यया बंधुजनेन बंधुरम् ॥ २२ ॥
स मुग्धमुर्लोहितपाणिपंकजः
स्वभावनिर्द्धूततमा नवोदयः।
शिशू रविर्वा गिरिशृंगरिंखिनो
व्यधत्त नित्यं सुखचारिणः खगान् ॥ २३ ॥
पितुः प्रयत्नेन मुदे स खेलितः
सुविस्मिताविर्दशनांशुनिर्गमैः।
अतर्कितोपस्थितचंद्रिकांजनान्
वियत्यविद्याविदपि व्यबोधयत् ॥ २४ ॥

---

१ बहुवल्लीसमुदयसहितमपि। २ मुग्धा गीर्वाणी किरणाश्च।

विनोदयंत्रं शयनीयसंश्रयं
स मुग्धवृत्ति स्थिरदृग् विलोकयन् ।
व्यधत्त धात्रीरुपकंठवर्त्तिनी—
र्मुदा युजो व्यक्तमभुक्तपूर्वया ॥ २५ ॥

जुगुप्सयेवानवबोधदुर्लभं
चिराय बाल्यं जहते जनप्रिया ।
क्रमेण विद्याप्रहितेव शंफली
तं मारकोमारदशागुणाश्रयम् ॥ २६ ॥

गुरुप्रभावं विनयावलंबिनं
दृढानुरागं स्मितपूर्वभाषिणम् ।
ययो तमुन्मुच्य निवेदि चापलं
नपुंसकस्यास्ति न पुंगुणे रुचि ॥ २७ ॥

समं वयस्यैर्विनयेन तत्परो
गुरूपदेशोपनतासु बुद्धिमान् ।
विभज्य विद्यासु स लब्धशिक्षन
स्वयं हि भव्यस्य गुणा पुरस्सरा ॥ २[८ ॥]

कलाभिरच्छं प्रसितं निसर्गत
कषायनिम्नं खलु तस्य मानसम् ।
वहन्न जन्हे नयनैर्नतभ्रुवा
विवृत्तपाठीनसमानविभ्रमं ॥ २९ ॥

विशुद्धवृत्तं तमवाससत्पथं
मनोज्ञकांतिं नयनोत्सवाकृतिम् ।
सरावहर्थ्यंद्रमिवायलोकय—
न्नलब्ध नालिंगितुमंगनाजन ॥ ३० ॥

---

१ दर्पेण । २ अनुभूतया । ३ युवावस्था ।

अमुष्य नानागुणवस्तुसंग्रह-
श्चिरं जिगीषोर्विषयोपभुक्तये।
स्वनिर्मलात्पक्षिभयादिव स्वतो
न चित्तकोशः करणैरपाचेः ॥ ३१ ॥
सहारचक्षुः परिदिग्धचंदनोऽ—
वतंसयद्गुल्लिकचाः समल्लिकाः।
स्वचित्तशुद्धयेव बहिर्विवृद्धया
व्यभूष्यतां पांडुदुकूलमंडनः ॥ ३२ ॥
अनन्यकांतागुणलब्धमानसं
महानुभावं तमवाप्य वल्लभम्।
मुदेव सर्वं सुधिये समर्पयां-
बभूव तस्मै हृदयं सरस्वती ॥ ३३ ॥
स वद्धरागः स्थितमौल्यलंबिर्नी
ववंध भक्तिं जिनदेवपादयोः।
विवेकविद्यामयतल्पशायिनो
मनःप्रिया सैव मनीषितप्रदा ॥ ३४ ॥
स सत्यवादव्रतमक्षतं दधत्
दधौ न चित्ते भयलोभसंनिधिम्।
विभज्य लोकद्वयकल्पमाचरन्
न तद्विघाताय कृती कृतादरः ॥ ३५ ॥
अनुसरन् पूर्वभवस्य कर्मणां
स लाघवात् भोगवितृष्णमानसः।
गुरुं प्रतिश्राव्य कथंचिदंचितां
समाधिगुप्तस्य ययावुपांतिकम् ॥ ३६ ॥
विरज्य तयान्तवनं वनं गते
गंभोगकन्याः परिपक्वयौवनाः।

---

१ रक्षणहीनां। २ विद्याधरकन्याः।

निवृत्तकामानुभवं भवं तदा
विवृद्धशोकाः स्वयमभ्यमंसत ॥ ३७ ॥
निवेद्य तस्मै गुरवे स धीरधी-
र्भवार्णवावर्तनिपातभीरुताम् ।
अनुज्ञया तस्य तपस्तपोनिधे—
रुपादितार्हत्परमेष्ठिभावितम् ॥ ३८ ॥
प्रभौ तदाज्ञां भुवनैकजित्वरीं
बलादवज्ञाय तपोवनं गते ।
ह्रिया ध्रुवं निह्नुतविग्रहं जना—
स्ततः प्रभृत्याहुरनंगमंगजम् ॥ ३९ ॥
सुधीरधीयन् परमागमं मुनि—
र्जितश्रमो विश्रुतसंयमाश्रयः ।
निरंजनः सद्यमुचिततपर—
स्तपांसि तेपे बहिरंतरप्यसौ ॥ ४० ॥
विविक्तरम्यां स गुहामुपाश्रितो
महाहिमाद्रेर्महनीयसंयमः ।
अवास्थितोत्सर्गविधानकर्मणा
समानयन् साधुसमाधिभावनाम् ॥ ४१ ॥
निवृत्य दुःखाम्नरकात्तिरायुषा
भुजंगभूयं प्रतिपद्य कर्मणा ।
अरिश्च तस्मिन् निवसन् गुहागृहे
दृशा तमैक्षत रोषरूक्षया ॥ ४२ ॥
वहन् वपू रासभरोमधूम्रं
विभक्तसारच्छविमंडलोचितम् ।
प्रकामनिश्वासहुताशनिर्गम-
प्रतप्तपूर्वस्थितशाड्वलद्रुमम् ॥ ४३ ॥

१ अर्हत् । २ तिर्यगायुषा । ३ सर्परं ।

स दीर्घपुच्छप्रविवर्त्तनस्फुटत्-
बृहच्छिलाकूटकठोरशब्दितः।
चिरंतनक्रोधविवृद्धमत्सरो
विलोलजिव्हाप्रविदारिताननः ॥ ४४ ॥

विरूढतालद्वयसो महावपुः
सवेगमभ्येत्य स मृत्युसंनिभः।
करालदंष्ट्रांकुरकोटिपाटितं
चकार वैराग्यधनस्य मस्तकम् ॥ ४५ ॥

विदश्यमानं भुजगेन नश्वरं
मुनिः प्रसंख्यानसमिद्धकंटकः।
अभीरशोचन् विजहौ वपुर्वह-
न्ननेकजन्मांतरदुर्लभान् गुणान् ॥ ४६ ॥

उपेत्य कल्पं पुनरच्युताह्वयं
स पुष्करस्याधिपतिर्व्यजायत।
गुणा हि यत्नेन कृताभिरक्षणा
भवंति पुंसां परिपाकपेशलाः ॥ ४७ ॥

स रत्नमौलिस्फुरदर्कदीधितिः
प्रसन्नशीतद्युतिसंनिभाननम्।
उदूढदिव्याभरणं च संदधे
मनोज्ञमस्पंदविलोचनं वपुः ॥ ४८ ॥

स दिव्यकांतामुखपंकजश्रियं
कराभिमर्षी तनुतां तमोपहः।
चकार चित्रं सुकृती यदप्सरो--
विशालनेत्रोत्पलविभ्रमश्रियम् ॥ ४९ ॥

भुजंगदंष्ट्राविषवेदसंभवं
स दुस्सहं तापमिवानुबंधिनम्।

निराकरिष्यन्निव दिव्यसुंदरी--
सुधासमग्राभरमापपौ धिया ॥ ५० ॥
अजस्रमापातुकचित्तविभ्रमान्--
नितांतमाविभ्यदिवांगजन्मनः ।
स मुग्धकांताकुचपर्वतांतरं
बृहन्नितंबेन मनस्यशिथियत् ॥ ५१ ॥
मनो मुषित्वा मदनेन मत्सरात्
स्वकं स तत्रैव तिरोहितं हितम् ।
विविच्य मार्गन्निव स्वर्णतभ्रुवां
मनस्युपादत्त कटीरयी रयी ॥ ५२ ॥
निपीय नेत्रांजलिसंग्रहागतं
तदंगसौरूप्यरसं सतृष्णयः ।
सुधारसे तत्समयेऽप्युपास्थिते
दिवौकसां वामदृशो विसस्मरुः ॥ ५३ ।
विकाशिकल्पद्रुममाल्यवासना--
समृद्धमेकादशमासि निश्वसन् ।
विनिद्रकुंदच्छविशुभ्रलेश्यया
वहन्नरत्नित्रयसंमितं वपुः ॥ ५४ ॥
स वत्सराणामयुतद्वये गते
पुनः सहस्रद्वितयेन संयुते ।
स्वतृप्तियोगार्थमनुस्मृतामृतो
मनःप्रवीचारसुखोत्सवागमः ॥ ५५ ॥
अवाप्य विद्युत्प्रभनाम विंशतिं
महार्णवान् द्वौ च सुखार्णवाश्रितः ।
अरंस्त देवस्त्रिदिवे मृगेक्षणा-
घनस्तनानुस्मृतिकर्मकर्मठः ॥ ५६ ॥

प्रदीकुपाशस्तु मुनीश्वरं द्विप—
    स्निरंमदापातनिवृत्तजीवितः।
स देवतुल्यायुरभुंक्त वेदना—
    स्तमःप्रभायामशुभोदयोद्धवाः॥ ५७॥

इहैव पद्माह्वयदेशगोचरं
    गिरींद्रपाश्चात्यविदेहसंश्रयम्।
प्रसिद्धमस्त्यश्वपुरं यशोधनैः
    समेधितं द्वीपवरे नरोत्तमैः॥ ५८॥

यदीयशालोच्छ्रितभित्तिमस्तक—
    स्फुरन्मणिव्रातशिखाग्रचुंबिनाः।
वहंत्यवर्षासमयेऽपि वारिदा
    विभक्तवर्णामरचापविभ्रमम्॥ ५९॥

अनारतं यद्धनवत्सवत्सलं
    निरस्तसर्वासुमदापदापगम्।
चकास्ति विद्याविनयालयालयं
    पवित्रचर्यापवमानमानवम्॥ ६०॥

यदीय कांताः स्फुरदंगयष्टयः
    सुधागृहोत्संगमलंकरिष्णवः।
विभज्य साक्षादचिरप्रभाधियं
    जनस्य कुर्वंति वलाहकादसे॥ ६१॥

नभोनिभस्फाटिकसौधकोटिषु
    स्थिरं पिनद्धा मणयः प्रभास्वराः।
दिवापि यस्मिञ्जनयंति देहिना—
    मुदीर्णनक्षत्रसमूहविभ्रमम्॥ ६२॥

---

१ सर्पः। २ विद्युत्। ३ इंद्रधनुः।

हरिन्मणिस्तंभसमुद्भवा रुचः
प्रदीपधामप्रतिरोधहेतवः ।
गृहेषु यत्राभिनवोढयोषितां
हरंति रात्रौ सुरतोत्सवह्रियम् ॥ ६३ ॥

अवा[१]ग्विसर्गं जनसंनिधौ प्रिये—
र्नतभ्रुवो यत्र विविच्य केवलम् ।
वदंति लीलावलितैर्विलोकितैः
स्मरोपदिष्टं किमपि स्वहृद्गतम् ॥ ६४ ॥

बृहन्नितंबा मणिमेखलाभृत—
श्चिराय यत्र स्थितिमत्पयोधरा[२]ः ।
वहंति वेश्या नगरोचितस्थितिं
भुजंगभो[३]गा[४]ञ्चितगंडभित्तयः ॥ ६५ ॥

वृ[५]षाभिरूढाः परिस्पृष्टभूत[६]यो
विदी[७]प्तकामांगतया पिनाकि[८]नः ।
सदारमासीददनंत[९]भोगकं
वहंति यस्मिन् वपुरिद्धमीश्वरा[१०]ः ॥ ६६ ॥

प्रवर्तिते यत्र गुणोदयावहे
दयावहे यागसि मानवेहिता ।
न वेहिनाक्रांतमदोनवैभवा
न वैभवार्त्तिं प्रथयंति जंतवः ॥ ६७ ॥

विशेषवेदी विदुषां मनीषितो
निरस्य दोषानशिषत् पुरोत्तमम् ।

---

१ वाचं विना। २ मेघाः स्तनाश्च। ३ सर्पाः विटाश्च। ४ सर्पशरीर सेवनं ५ वृषभो धर्मश्च । ६ भस्म विभूतिश्च । ७ प्रज्वालित, विशेषेण दी ८ शिवस्य । ९ शेषनागशरीर अनंताश्च ये भोगा. । १० धनाढ्या. ।

तदेव यं संसदि वज्रवीर्य इ-
त्युदाहरंति श्रुतधर्मवेदिनः ॥ ६८ ॥

अबुध्यत स्वप्नमपि प्रजाहिते
प्रवृद्धरोषोऽपि ररक्ष स क्षमाम्।
न भूयसाऽभिज्वलितोऽपि तेजसा
प्रजाघनस्नेहगुणं व्यलीनयत् ॥ ६९ ॥

प्रभूतदानः स महान्वयादृते
बभूव नक्षत्रतया विनाऽभिजित्।
अहीनवृत्तिर्विजहौ द्विजिह्वतां
विना स्ववंशस्य विवर्द्धिता जलैः ॥ ७० ॥

यशस्यकर्मा स जहत् भुजंगता-
मपि स्वधात्रीं बुभुजे भुजं गताम्।
प्रजासु चक्रे कृपया स बंधुतां
करप्रवृद्धया विहितोन्नतिं धुताम् ॥ ७१ ॥

स यावदंतं निजकीर्तिभामिनी—
प्रवेशदानादिव तुष्टमानसः।
यशोऽमृताप्यायनदत्ततृप्तिका-
श्चकार तृप्ता रविरश्मिभिर्दिशः ॥ ७२ ॥

निसर्गसेव्ये नृपतौ महागुणाः
स्थितिं गतास्तत्र यदद्भुतमद्भुतम्।
जनस्य दूरेव मतोऽपि चेतसि
स्थिरानुरागप्रसवस्य बीजताम् ॥ ७३ ॥

उपाश्रितक्षेमविधानदीक्षितो
गुणैर्गुणज्ञोऽयममूल्यसृष्टिभिः।

---

१ शुभ्रौ। २ विटत्वम्।

जने च गृध्नुप्रकृते जनाधिपः
स्खलुसिसंपातभियेव शिश्रिये ॥ ७४ ॥
अनन्यथाभावनियोगनिःपतद्--
विवेकपूर्वं विहितेन कर्मणा ।
अवद्यशीलादपि विश्वदायति
न विभ्यतीं भूभुगसावजिघ्रपत् ॥ ७५ ॥
कृतातिसर्गा निजचापलादिव
श्रियश्च पात्रेषु परार्थकारिणा ।
नृपेण तत्राहितमत्सरा इव
व्यतिष्ठपंत श्रियमन्यदुर्वहाम् ॥ ७६ ॥
बहुप्रलापा परुषाक्षरश्रवा
मृषावदंती च विविच्यकारिणः ।
जगाम भीतेव भृशं प्रभावतः
सरस्वती तस्य मुखे न संनिधिम् ॥ ७७ ॥
अलक्षणाः शश्वदधर्मकारिणो
विदग्धगर्ह्यो व्यवहारसिद्धये ।
असाधवस्तेन न केवलं नरा
नृपेण शब्दा अपि न प्रचक्रिरे ॥ ७८ ॥
विशुद्धवर्णाऽयनवृत्तिसंश्रया
वृषानुरूपप्रसवा महौजसः ।
नृपस्य गावो वदनावनीभवा
विभज्य नित्यं दुदुहुः प्रजाहितम् ॥ ७९ ॥
भुजेऽमिचर्ये हरिचंदनद्रव--
प्रभाविसौगंध्यसमृद्धिबंधुरे ।
महीभुजः संश्रयि शौर्यदैवतं
तदेकभोग्यामकरोद्वसुंधराम् ॥ ८० ॥

---

१ अवक्षिप्ता. । २ वक्षग, पक्षे वन काननमिति । ३ धेनव , वाचश्च

द्विपो दवीयस्यपि दग्धमानसाः
स्थिता जगद्व्यापितदीयतेजसा ।
प्रपेदिरे न प्रतिप्रत्तिधन्यतां
चिराय लेपा इव संहृतेंद्रियाः ॥ ८१ ॥

अनंगरागोदयवर्धनक्षमा
तदीयबाहुप्रणयावहेश्वरी ।
आमेदिनीजा विजयेति भामिनी
श्रियस्सपत्नी समभून्महीभृतः ॥ ८२ ॥

प्रकामरक्तं नृपस्य चेतसा
चिराय तस्याधरणावुपाहितौ ।
पयःप्रधौतावपि रागविभ्रमं
नतभ्रुवो नूनमतीव बभ्रतुः ॥ ८३ ॥

क्रमौ मृगाक्ष्या कलनूपुरांकितौ
सभृंगपद्मावितिमे दृढा मतिः ।
यतो यतस्तन्न्यसनं धरातले
ततस्ततो यत्समभूयत श्रिया ॥ ८४ ॥

पुरःप्रसर्पन्नखशुभ्रदीधिती
तदीयपादावरजःस्पृशौ नृणाम् ।
स्वशंकया पंकरुहाणि जल्पतां
पृथग्विविच्याहसतामिवाञ्जताम् ॥ ८५ ॥

मनोरमा नर्तनहारि निस्स्वनं
पदस्यमुच्चैरथ नूपुरं परम् ।
चिरं दधानाऽपि विधूतकल्मषा
दधौ न तन्वी विजयाऽर्द्धशीलताम् ॥ ८६ ॥

---

१ पादौ ।
पा. च. ३

तया नु मीनध्वजसत्पताकया
सलीलमुद्यच्छफरानुरूपयोः ।
गुणेन संघातभृतोर्न जंघयो—
र्मनस्तु न व्यजत साधु पश्यताम् ॥
करेणुकान्ताकरवृत्तपीवरौ
मृगीदृगूरू हि गुरू पराजितौ ।
प्रदीप्तरूपस्मरसंश्रयाविव
व्यभासिषातां नवचंपकच्छवी ॥ ८८ ॥
अनेकपत्त्रोल्लिखितायतां जरा
गुणं तदूर्वोरिव जेतुमक्षमा ।
वनस्थितिं काचिदयाद्विलज्जया
विरज्य रंभास्वितराप्सरोगता ॥ ८९ ॥
मनोरमां पुष्टिमजस्रमाक्षिपन्
स यौवनो नूतनरत्नमेखलाम् ।
चकार मारालयनित्यसन्निधि-
प्रसंगलीलां सुदतीकटीतटः ॥ ९० ॥
विकीर्णरत्नांशुनिरस्तदुस्तमः-
प्रपंचकांचीविभवो विनिर्वभौ ।
बृहन्नितंबः सुतनोस्तनूभृतां
न दक्षिणाशाविषयो जनाश्रयः ॥ ९१ ॥
तनोतु भारोभयपार्श्ववर्तिनो
भियेव भूम्नः स्वविरोधिनो गुणात् ।
चिराय मध्यस्थतयापि पप्रथे
गुणानभिघ्नन् कृशिमा मृगीदृशः ॥ ९२ ॥
विमुच्य संभूय सुवर्णहारिणं
नितंबमुच्चैर्वलिभिर्नतभ्रुवः ।

---

शोभनवर्णशालिनम् ।

न मध्यदेशो रुरुधे न यच्चिरं
भवेत् कृशत्वस्य फलं तदीदृशम् ॥ ९३ ॥
सुवृत्तमुक्तामयतां स्वसंगिनो
गुणेन हारस्य समृद्धिमोजसा ।
प्रयोजयंतावपि साधु सुभ्रुवः
कथं न्वभूतामविवेकिनौ स्तनौ ॥ ९४ ॥
समग्रभूभृन्मणिमुक्तरागमा—
वभेदवृत्ती पृथुलव्धमंडलौ ।
सरस्य मूर्त्तौ नयविक्रमाविव
स्तनौ तदीयावुचितं यदुद्धतौ ॥ ९५ ॥
तदीयसौंदर्यविशेषविस्मित—
स्मरेण रागो रतये विचोदितः ।
प्रकल्प्य मूल्यं नवपल्लवश्रियं
वली मृगाक्ष्याः करमग्रहीद् ध्रुवम् ॥ ९६ ॥
भृशं कृशांग्याः करजायतांकुरं—
नं केतकीसूचिसमैश्च पंचभिः ।
चिराय जेता मदनो महीभुज—
स्तदादि वभ्रे किल पंचवाणनाम् ॥ ९७ ॥
न्यधत्त रत्नद्युतिजालमांसले
वरद्रुमस्कंधसमाश्रये वधूः ।
मनोज्ञलावण्यपयोनिपेकिते
कृतालवाले वलयैर्भुजालते ॥ ९८ ॥
निरूप्रमंगैरमृतात्मकैर्वपु—
र्द्वितीयमिंदोरिव सुंदरीमुखम् ।

---

१ देश., राष्ट्रं च ।

गृहीतपूर्वस्थितिकां महीभृत—
स्तटीमिवाउुज्झितरत्नमंडनाम् ।
उपास्त कांतामुदयार्थमर्कवद्
दिवः स देवः क्षणदीधितिप्रभः ॥ १०६ ॥

जगज्जिगीषोर्जठराशये शिशोः
क्रमात् प्रवृद्धौ दिवसेष्वनाकुलम् ।
भियेव तस्मादनुयद्धवृत्तिभि—
र्विमुक्तमासीद् वलिभिर्वधूदरम् ॥ १०७ ॥

अखण्डभूमंडलरक्षणक्षम—
प्रभावमंतर्दधती तमर्भकम् ।
प्ररूढदर्पेव जहे महौजसं
निजोदरक्षामतया नितंबिनी ॥ १०८ ॥

निषीदद्ंगेष्वथ गर्भशायिनः
शिशोर्गुणानामिव भूरिगौरम् ।
अभिव्यनक्ति स्म गजेंद्रगामिनी
विनोदलीलास्वलसेन कर्मणा ॥ १०९ ॥

सखीप्रकोष्ठं प्रतिगृह्य गर्भिणी
कथंचिदुत्थाय कृतांजलिक्रियाम् ।
नृपः कृपाहर्षविमिश्रया दृशा
गृहागतो वै क्षणमैक्षत प्रियाम् ॥ ११० ॥

उदूढगर्भां दयितां प्रजापति—
र्निधानगर्भामिव भूतधारिणीम् ।
अनेकविद्याजपहोमकर्मभि—
र्विभक्तरक्षावधिरन्ववर्तत ॥ १११ ॥

---

१ स्कंधम् ।

प्रवर्तिना पुंसवनादिषु क्रमात्
स निभर्मा दोहलभेदमाहितः ।
प्रपृच्छ्य शृण्वन् सुहृदः सखीजना—
ज्जहर्ष सत्पुत्रविनिर्णयावहम् ॥ ११२ ॥

स्फुरत्प्रभामंडलमध्यवर्तिना
विजित्य चक्रेण दिशां विशांपतीन् ।
स्वपादमूलानतमौलिमस्तकान्
न्यधात् सदुत्साहवती सती सती ॥ ११३ ॥

तथापि सा पीनपयोधरा वधू—
र्निधीन्निधेयान् प्रविधाय धामभिः ।
बभूव युक्ता भुवनस्य तद्धने—
र्धनाभिलाषग्रहनिग्रहेच्छया ॥ ११४ ॥

प्रभावभूयांसमपांशुलच्छविं
महीशमालागुणरूढमुन्नतम् ।
अजीजनत् सूनुमिलापतेः प्रिया
खनेर्धरित्रीव विनिर्मलं मणिम् ॥ ११५ ॥

स्त्रैरिवास्याखिलदिक्प्रभाविनो
भियेव धाम्नो भृशमुल्लसिष्यत ।
प्रसूतिकाले कृतिनो नवग्रहैः
शुभेतरावस्थितिरभ्यमुच्यत ॥ ११६ ॥

उदीर्णतेजः प्रसरेण साक्षिणा
करग्रहेणोपरिभाविनं पतिम् ।
नमीश्वरं द्रष्टुमिवोदितं दिशो
निरासुरंभोदपटाभिवेष्टनम् ॥ ११७ ॥

विकस्वरोद्यानलताविनर्तनैः
रनात्स्वरोमृध्रिरकुष्टभूरजाः ।

मरुच्च सिंचन्निव देहिनः शनै—
यंयौ तदानंदसमुद्रसीकरैः ॥ ११८ ॥

स्वयंप्रभाव्योपनतास्तमोपहा
नृपेंद्रविद्या इव रत्नदीपिकाः।
परीत्य तं पुण्यनिधिं चतुर्विधाः
शिखामयूखोल्लिखितांबरा बभुः ॥ ११९ ॥

कृतालिवैतालिकनिश्चनस्तवा
दिवः पतंती कुसुमावली तदा।
व्यधादनाघ्रातचरेण हारिणा
जनस्य गंधेन वसुंधरातलम् ॥ १२० ॥

निशम्यमानेन विवृत्य दिग्गजैः
क्षणं समुत्तंभितकर्णपल्लवैः।
गभीरदंसध्वनिनाभिचुंबितं
तदांबरं शब्दगुणं व्यजृंभत ॥ १२१ ॥

मुखेन हर्षामृतबिंदुवर्षिणा
निवेदितार्थं पुनरुक्तया गिरा।
इदं भुजिष्या समुपेत्य सत्वरं
नरेंद्रमास्थानगतं व्यजिज्ञपत् ॥ १२२ ॥

व्यपाचि शुक्लेन जनस्य कर्मणा
तवांघ्रिसेवारसवेदिनोऽधुना।
असोष्ट पुत्रं सदभिष्टुतं गुणै—
र्यदद्य पृथ्वीश्वर भर्तृदारिका ॥ १२३ ॥

भुजेन पूर्वं वहतस्तयोर्वरां
सहायवानित्यभवश्च यद् वचः।

---

१ पूर्वमनाघ्रातेन। २ शब्दो गुणो यस्य। ३ दास्या। ४ शुभेन। ५ श्रेष्ठ-जनस्तुतम्।

परं न तत्ते तनयेन वर्तितं
दिवौकसामाक्रमणं च तेजसा ॥ १२४ ॥
असिक्रियाया वचनं मनोहरं
निशम्य या प्रीतिरभून्महीभुजः ।
इयत्तया तां प्रतिवेद्मि किं तु ते
न संति शब्दाः कथयामि येस्तथा ॥ १२५ ॥
अनेकवस्त्राभरणैर्विशांपतिः
प्रतोष्य चेटीं द्विजदीनमानवैः ।
विमुच्य जीवानपि बंधनास्थितां—
श्चकार तस्मिन्नगरे महोत्सवम् ॥ १२६ ॥
सुधागृहोत्तंभितहेमयष्टयो
महापताकाः पवनाभिकंपिताः ।
अयं पतिस्ते शिशुरस्य भूयतां
त्वयेति नूनं जगदुर्दिवः प्रियम् ॥ १२७ ॥
अथावदाता पटहोद्भवध्वनि—
र्विचित्रदंडाभिहतिप्रभावतः ।
नृपस्य हर्षाभ्युदयकारहेतवे
द्विषां प्रतीहार इवापसारकः ॥ १२८ ॥
सकुंकुमांबुप्रतिपिंकशोणिता
विभेजुराक्रीडनमंगनाजनाः ।
नृपात्मजेद्रोग्दयेन वर्धिते
भृशं निमग्ना इव रागसागरे ॥ १२९ ॥
अनेकयंत्रच्युतकुंकुमांबुभि—
र्जपातुचर्णैः प्रविकीर्णमंबरम् ।
अधत्त तस्मिन् समये नभोगता—
मकालसंध्याघनपंक्तिविभ्रमम् ॥ १३० ॥

---

१ नभाः ।

सवारिभृंगारकरा वरांगनाः
स्वनर्मबंधून् प्रति सत्वरं गताः।
जलार्द्रसूक्ष्मांबरदर्शितो रवो
जनैर्विलोक्यंत विवृद्धकौतुकैः॥ १३१॥

आलोकयंती स्तनयोर्विलासिनी
विपङ्कर्दंभश्छुरितोत्तरच्छदम्।
अवाकिरल्लोचनदीधितिं तयो—
रवाङ्मुखी नीलपटीमिव ह्रिया॥ १३२॥

अनुध्रितक्लेदनिमित्तमेकया
पतन्धघः कुंकुमपंकिले तले।
कृतार्थमात्मानमबुद्ध कश्चन
स्तनोपपीडं परिरभ्य धारितः॥ १३३॥

कृतानुवादं कलकीचकस्वनै—
र्जगुः सुगोप्यो मृदु तच्च गीतकम्।
क्वणन्मुखैस्तन्मुखगंधपातिभि—
र्विभज्यमानं जगृहे मधुव्रतैः॥ १३४॥

अबुध्यमानाः परिधानमंकतो
वहिश्च्युतं काश्चन वृद्धयोषितः।
ससंभ्रमदालास्यकृतोऽपि पश्यतां
बभूवुरुद्वेलविहासहेतवः॥ १३५॥

गजास्तदानीं विदलत्कपोलका
नृपप्रमोदा इव मूर्तितां गताः।
अनूनदानोत्सवसंपदोचितं
वितेनिरे सामगविप्रतर्पणम्॥ १३६॥

समंतसर्पन् मृगनाभिसौरभः
समुत्पतन् व्योमपुरस्समारुतः।

---

१ वल्लभम्।

भ्रमद्द्विरेफप्रकरावगुंठितो
व्यधत्त साक्षादिव मेघदुर्दिनम् ॥ १३७ ॥

मदांधमारुह्य महागजं नृपः
प्रयन् स वीथिष्विभयूथवेष्टितम् ।
प्रभुर्वितस्तार कृतस्तवो जनै—
र्जनप्रियामंबरवृष्टिमंबरात् ॥ १३८ ॥

क्षितिपतिमवलोक्य प्रौढहर्षातिभारा
हयपुरनृपवीथौ सौधशृंगाधिरूढाः ।
अतिमधुरमगायन्नंगनाः काश्चिदन्याः ।
ननृतुरमृतवीचीमीक्षणैर्विक्षिपंत्यः ॥ १३९ ॥

शुभदिनसमवाये लग्नशुद्धावमात्यै—
रधिगततनयमार्गैर्वयोवृद्धैश्च सार्धम् ।
अभिमतमतिसृज्य प्रीणयत्प्राणिवर्गं
तनयमकृत नाम्ना वज्रनाभं स भूपः ॥ १४० ॥

पद्माभोगरभक्षमस्य विततैः पत्रैरनाच्छादिन—
स्तस्योद्वीक्ष्य विकासमुत्सुकतया तिग्मांशुधामाश्रयम् ।
दृष्ट्यापांगनिविष्टयैकरतया तरसंगमाकांक्षिणी
तस्थौ पुण्यनदीह्रदस्य सकला लक्ष्मीस्सरोजाश्रया ॥ १४१ ॥

भूलोकाधिपनंदनस्य जनतानंदोत्सवोत्पादिनः ।
प्राप्तस्य प्रचुरानुरागनिचयामुच्चैः प्रचेतोदिशम् ।
ख्यातोमेश्वरमौलिमंडनविधेर्जातस्य चारुश्रिया
बालस्येव निशाकरस्य जगता चक्रे प्रणामांजलिः ॥ १४२

इति श्रीवादिराजसूरिविरचिते श्रीपार्श्वजिनेश्वरचरिते
महाकाव्ये वज्रनाभचक्रवर्तिप्रादुर्भावो नाम
चतुर्थः सर्गः ।

## पंचमः सर्गः ।



विजयातनयः स वर्धमानः
सह बंधुप्रमदेन सन्मुखश्रीः ।
निजपुण्यविलिप्सयेव पश्चाद्
गुणमुख्यैरनुबंधिभिः सिषेवे ॥ १ ॥

विनिरुद्धतमस्सु तेन भूयः
कमलानंदकरेण भास्वतेव ।
घनवीथिरिवाखिलासु दिक्षु
प्रचकास जननी नयोदयेन ॥ २ ॥

अपि पथ्यसमुद्भवप्रजाना—
मुपसेवाफलदः स दोषहारी ।
अभवन्महतः क्षयस्य हेतु—
र्भिषतां दैवमचिंतनीयशक्तिः ॥ ३ ॥

गुणवत्प्रतिपन्नसाधुसंधि
प्रथमोदीरितवृद्धिभावशुद्धम् ।
प्रथतः पितुराज्ञयाऽध्यगीष्ट
स्वसमं व्याकरणं सवृत्तचौलः ॥ ४ ॥

प्रतियोधकचित्तदर्पभंगे
बलिना तेन कृते मदोदयेऽपि ।
विषया विजगाहिरे हृषीक—
द्विपनादैर्न यथामतं तदीयैः ॥ ५ ॥

द्रढिमानिविडं तदंगसंधि—
ष्वनुयान्ननुजीविभिर्वयस्यैः ।
अजनिष्ट दुरत्ययो गुणानां
बलवत्ता न विना प्रधानसेवाम् ॥ ६ ॥

चतसृष्वयमुद्यमादधीती
नृपविद्यासु निरूढसंप्रदायः ।
विजहे निजबाल्यकेन सूनु—
रयथाकाममवस्थयेव राज्ञः ॥ ७ ॥

विकसन्मुखचंद्रकांतिकाश—
च्छविधौतांबरचुंबिहंसमुद्रम् ।
न शरत्समयस्य मत्सरीव
प्रतिजग्राह वपुः स यौवनश्रीः ॥ ८ ॥

परिघायतबाहुपीवरं
कृशमध्यं द्युतिमद्विशालवक्षः ।
अजनद्विपतां भिये विचित्रं
वपुरव्याजमनोहरं नदीयम् ॥ ९ ॥

विकचांबुजहारचक्रचिन्हं
दधदोजः स्थिरसीमनिम्नमध्यम् ।
कमलाकरतामिवाचचक्षे
विलसत्पाणितलं नृपात्मजस्य ॥ १० ॥

अधिराजरमासहेति तुयद्—
विनयश्रीरचिरेण वज्रनाभः ।
सवयोभिरमासहेति सिद्धिं
गुरुचित्रानुनयं क्रमेण लेभे ॥ ११ ॥

सहितो वरसंगरद्रढिम्ना
रसधाराभरितो विवेकहेतुः ।
न हि तस्य परं करे कृपाणः
कमलोद्भासिनि निर्बभौ मुखेऽपि ॥ १२ ॥

---

१ युद्धः प्रतिज्ञा न ।

अलिनीलरुचिस्तदंगपीठ—
स्थगनीया परहृत्प्रवेशदक्षा ।
नयतत्त्वविदो न हस्त एव
विलसत्कुंतलता कचेऽपि तस्य ॥ १३ ॥

गुणकोटिचरेण रूढिभाजा
हितवर्त्मप्रतिपंथिमंथनेन ।
कलितं न सपाणिमेव वर्त्मे
दृढधर्मेण मनोऽपि धर्मजेता ॥ १४ ॥

फलमभिमुखहृदस्तदीयो
गुणयोगक्रमभावनाभियुक्तः ।
कणयः प्रतिविध्यति स्म लक्ष्यं
रिपुराजन्यमनांसि च प्रभावः ॥ १५ ॥

शरवर्षि सवंशजीवमुच्चै—
र्बलमुत्पीड्य करग्रहेण वप्रे ।
वरकार्मुकमंडलं स विद्या—
मनुशीलन्नथ किं पुनर्जिगीषुः ॥ १६ ॥

नवयौवनसंभृतांगयष्टि
कृतविद्याधिगमं तमुर्वरेशाम् ।
तनयाः स्वयमेव निन्युरुच्चैः
कुचकुंभोद्वहनातिखिन्नमध्याः ॥१

वदनेऽधरपानलिप्सयेव
प्रतिलग्नं शरदिंदुबिंबकांते ।
वरहारमयूखमंडलेन
स्तनयोः संनिहितं युयुत्सयेव ॥

---

१ नृपाणाम् ।

कनकांगदशृंखलां बबंध
स्खलितात्मानमिव स्थितं च बाह्वोः ।
नखरद्युतिनिर्गमच्छलेन
प्रचुरं पाणितलादिव क्षरंतम् ॥ १९ ॥

श्रवसोरिव दीर्घलोचनाभ्यां
धवलापांगरुचा निपिच्यमानाम् ।
तनुजन्मतयेव मुग्धवृत्ति
स्थिरमारुह्य निविष्टमंसदेशे ॥ २० ॥

निकटस्थगभीरनाभिकूपं
नमदग्रं वलितं कृशिम्नि मग्नम् ।
स निपातमवेत्य मध्यदेशं
कृपयेव स्थगयंतमुल्लसंतम् ॥ २१ ॥

मसृणं महदंबरावरुद्धं
सुरसिंधोरिव सैकतं गरीयः ।
रमणीयतयेव सोपभोगं
जघनं सच्छदिनारमलार्जतम् ॥ २२ ॥

तरुणीः परिणीय ताः स भोगी
पृथु लावण्यमयं गुणं दधानाः ।
मदनं समुपाश्रितं पुपोष
प्रकृतिस्तस्य हि संश्रितामिरक्षा ॥ २३ ॥

सचिवैरभिषिच्य यौवराज्ये
तनयं धर्महरं विभज्य राजा ।
चिरमुद्वहनादिवातिखिन्नो
निदधौ तत्र धुरं वसुंधरायाः ॥ २४ ॥

अविहाय महीशमाश्रयंती
युवराजे चिन्नकाम राज्यलक्ष्मीः ।

१ द्रुद

सहकारमिवाऽवगाहमाना
सुरभिश्रीः सविकासचंदनस्था ॥ २५ ॥

अचिरागतयौवराज्यसिद्धे—
र्नृपसूनोः क्रमतो दिदृक्षयेव ।
ऋतवस्तमुपासदन् यथास्वं
प्रसवोपायनसंप्रदानपूर्वम् ॥ २६ ॥

अवबुध्य निजालयं विपादाद्
रुदितायाः शरदो हिमागमादौ ।
भृशमश्रुलवैरिव प्रसस्रे
हिमबिंदुप्रकरैर्विपल्यपारे ॥ २७ ॥

शरदः सुहृदो लयेन खेदा—
च्चलितायाः सुतरां मरालपंक्तेः ।
धुतपक्षतिनिर्विकीर्यमाणं
तुहिनं तूलमिवांबरं न्यगैत्मीन् ॥ २८ ॥

हिमशीतलवातसंनिपाता—
दिव भीत्या श्लथमंधिजीर्णपर्णैः ।
वसुधाप्रदरोदरेषु चक्रे
तरुशाखाः प्रविमुच्य संनिवेशाः ॥ २९ ॥

समये हिमवर्षिणि स्वहेतिं—
प्रमथम्लानिभयादिवांगजात्मा ।
अमनागविशन्मनःकुटीरं
युवराजस्य पुरे कृशोदरीणाम् ॥ ३० ॥

दिशि दिश्युपचेयमानमूर्ति—
र्नृपसूनोरिव शत्रुभीतचित्तैः ।

१—आश्रम् । २ बागः ।

शिशिरः स हिमर्तुरेव जज्ञे
विरहस्त्रीहृदयप्रकंपकारी ॥ ३१ ॥

इतरेतरकुट्टनक्कणद्भि—
र्दशनैः सत्रभुजस्य शीतकंपाः।
ज्वलदग्निसदः प्रथाममह्ना—
मविशन् कर्पटिनः सवेगमंते ॥ ३२ ॥

निशि निम्नतया हिमं निपीय
प्रचुरं प्रातरिदं वपुष्यजीर्णम्।
अवमन्निव वर्तुलस्थवीयं
प्रसवच्छन्नतया मधूकवृक्षाः ॥ ३३ ॥

सवयोविरुताः स्वपत्रनेत्रै—
स्तुहिनांशुप्रमुखाश्च तीरवृक्षाः।
भृशमन्वरदन्निवात्मनीनं
हिमभग्नं कमलाकरं प्रभाते ॥ ३४ ॥

शिशिरांगतया करीषजाग्निं
सह वत्सैः परिवृत्य गोपडिंभाः।
व्युदतप्सत संप्रसार्य बाहून्
दिवसादौ नगराद्वहिस्सजल्पाः ॥ ३'

वनिताजनमानशल्यशैलं
प्रणुदन् जीर्णमिवाशु पर्णजालम्।
प्रथमेऽहनि देहकांतिहारी
पवमानः प्रववौ मधूकगंधिः ॥ ३६ ॥

असहिष्णुरिवेक्षितुं नलिन्याः
किल तत्कालदशागतं निकारम्।

१ पक्षिण।

विनिमील्य निजप्रतापनेत्रं
सुपथं धर्मरुचिर्लघु प्रतस्थे ॥ ३७ ॥

हिमभीरुतयेव भावनीयं
प्रविमुच्यातपमाश्रितावकाशम्।
वनितास्तनमंडलेषु तस्थौ
सघनप्रावरणेषु बाढमूष्मा ॥ ३८ ॥

गुणमच्छतया तुषारदोषा—
दलभन्नंबरवस्त्रचांबराणि।
नवकंबलविक्रयस्तु लाभं
प्रददौ मूल्यचतुर्गुणं वणिग्भ्यः ॥ ३९ ॥

मणिदीधितदीपिकाप्रकाशे
निशि कालागरुपिंडधूपगर्भे।
विनिवेदितहंसतूलशय्या
पुलिने गर्भगृहे सहेमभित्तौ ॥ ४० ॥

अवतंसितमालतीसुगंधि—
विलसत्कुंकुमपंकदिग्धगात्रः।
वनिताभुजपंजरोपगूढो
युवराजदिदाशिरं स निर्विवेश ॥ ४१ ॥कुलकम्॥

ऋतुना सभयेन तेन तीव्रा—
दिव पद्माधिपनंदनप्रभावात्।[१]
विजहे वलयं दिशामदोषं
कृतपद्मालयवैभवक्षयेण॥ ४२ ॥

शिशिरस्तरुषंडविप्लवानां
स विधाता क नु वर्तते दुरात्मा।

---

१ सूर्यः। २ वसंतः।

पटुकोकिलकूजितैर्वसंतो
घनमित्याव्हयतीव संप्रविष्टः ॥ ४३ ॥

अनुरागकृतः सुगंधिसृष्टेः
सुरभेस्तस्य नवेन संगमेन ।
अभवन् घनवल्लयः सपुष्पाः
नृपसूनोश्च कुलीनराजकन्याः ॥ ४४ ॥

भुवनैकजयोत्सवाय कंतो—
रिव भृंगीजनमंगलस्वनौघैः ।
मधुना विधिनार्पितांकुरश्री—
रजनिष्टद्रुमयष्टिपालिकासु ॥ ४५ ॥

विटपेषु विरेजिरे विरूढाः
कलिकाः स्थूलदलावतुद्रुमाणाम् ।
शरधिष्विव पत्रमात्रदृश्याः
कुसुमेषोर्विजयैषिणः शरौघाः ॥ ४६ ॥

कलिकादलनोन्मदाः सहेलं
सहकारोद्गमगुच्छगर्भशय्याः ।
जघुषुः स्मरसंनिपातमूर्छा—
मिव पांथस्य नितांतमन्यपुष्टाः ॥ ४७ ॥

मधुरध्वनितश्रवाभितुष्टा
इव भूलद्रुमयष्टयस्समृद्धाः ।
कुसुमस्तवकानुतर्पपूर्णं
मधु सस्वादमधीयपन् द्विरेफान् ॥ ४८ ॥

न पतद्भिरुदासिरे समंतात्
कुसुमस्थानि रजांसि वल्लरीणाम् ।

१ पक्षे—रजस्वलाः २ कामस्य ।

मदनस्य शिलीमुखैरनस्था—
न्यपि तस्मिन् समये मनस्विनीनाम् ॥ ४९ ॥

विजिहासुरिवासहिष्णुरंगै-
र्विरहिस्त्रीश्वसितोपतापमूढम् ।
पवनः प्रविवेश दाक्षिणात्यो
द्रुमवीथीशिशिरं वनोपकंठम् ॥ ५० ॥

धुतपल्लवपाणिमाधवीना—
मभिरेमे प्रसवाननाभिचुंबी ।
व्रततीभवनं प्रविश्य वायु—
र्विविधालिंगनविभ्रमप्रयोगः ॥ ५१ ॥

पथिका मरुतः शरीरसंगं
वनवल्लीकुसुमस्पृशः सुगंधेः ।
विपवेदमिवावबुध्यमानाः
स्त जेपुः प्रमदाभिधानमंत्रान् ॥ ५२ ॥

मलयानिलनिर्धुतैः परागैः
प्रनिरुद्धं सहकारमंजरीणाम् ।
अनवेत्य वने ककुब्विभागं
परिबभ्राम जनश्चिरं प्रवासी ॥ ५३ ॥

सुरभिश्वसनेन नर्तिताया—
मरिहाम्बोद्भवदनेन पुष्पवल्याम् ।
नवकेसरगुच्छतल्पगेन
प्रसभं किन्नरगोयुगेन हृदयम् ॥ ५४ ॥

बकुलस्य विपातकामिनीनां
सुरसमुक्तं मधु संप्रपद्य कुरुतः ।

१ विसंगत । २ रुणः ।

मधुपैरनुपातिभिः सिषेवे
ननु सख्यं सुकरं समानशीलैः ॥ ५५

शतधा दलितं वियोगिनीना—
मिव कांतारविरूढमल्लिकानाम् ।
दिशि दिश्युपचिक्षिपे मरुद्भि—
र्मतिवैशद्यमिव प्रसूनवृंदम् ॥ ५६ ॥

वरचंपकयष्टिराततान
प्रसवस्तोमपिदांगिमावरुद्धा ।
कुपितस्मरवह्निवृष्टिरेषे—
त्यवदानं धृतिमंथि पांथवृन्दे ॥ ५७ ॥

मलयश्वसनोपनीतनाना—
प्रसवामोदिनि शुभ्रसौधपृष्ठे ।
वनितानिवहेन सायमह्नः
स विनोदं समवेत्य वज्रनाभः ॥ ५८ ॥

मृदुगीतिमुदस्तहेमरज्ज्वा—
यतदोलामणिपीठदेवतानाम् ।
स्वगुणग्रहणानुबंधरः—
मश्रृणोद्भ्यपुरस्य ·

नृपनंदनभोगसंप्रवेशात्
कृतकृत्येव मनोज्ञमाधव
विगलत्कुसुमान्यवर्त्ततोयन्—
नवघर्मांबुलवोपपन्नपृष्ठा

विधिनोपनताभिदाघशापा—
दतितीव्रादिव लुब्धकान्दियेव ।
प्रविमुच्य वनं प्रसूनसंप—

मृदुसुप्तिरनेकनागकन्या—
कृतभोगः प्रसृते तु घर्मकाले ।
विजहौ मलयं न मातरिश्वा
शिशिरं चंदननिर्झरांबुपातैः ॥ ६२ ॥

सुरभेर्निजसंमदैकहेतो—
र्विरहे दुःखमिवाधिकं दधानैः ।
जगृहे वनकोकिलैर्न मौनं
न पुनस्तत्समयागमावसानम् ॥ ६३ ॥

विविधद्रुमशाखुलानि बभुः
प्रसवोद्ध्वस्तजनांतवाटकानि ।
विनिवृक्षगतस्य दूरदिग्भ्यो
मधुराजस्य चमूनि जेश्तलीलाम् ॥ ६४ ॥

तपतापभियेव तीरवृक्ष—
व्रजतिर्यग्विधिनांधकारितेषु ।
विरमय्य चरप्रभावमस्थुः
पृथुलागाधमहाह्रदेषुः नद्यः ॥ ६५ ॥

अतिदीर्घपथभ्रमादिवार्के
परिसृग्यांबु पिबत्यदोषदिग्भ्यः ।
चकितैरिव भानुवर्त्म हित्वा
क्वचिदप्यंबुधरैरस्तिरोदभूवे ॥ ६६ ॥

रसशून्यतया विदारितास्या
वदनोद्भ्रांतरजोवितानधूम्राः ।
अभवन् ककुभो निदाघरूक्षाः
पथि राक्षस्य इवासुमद्भिर्भीत्यै ॥ ६७ ॥

---

ं दिशः ।

विरसाः परुषस्पृशः सशोषाः
पथिकोद्वेगकृतो निरूढतापाः।
जहिरे महिजैर्जरत्पलाशाः
शुचिमासस्य लवा इवांगलग्नाः॥ ६८॥

बहलोत्थितधूलिपाटलिम्ना
ककुभः काञ्चन संश्रिता विरेजुः।
तरणेरिव तापतो विवृद्धाद्
दलितोरःक्षरितप्रवाहरक्ताः॥ ६९॥

वनितानयनाभिरामलीला—
गुणचौर्यादिव दोषतो जनांतः।
अभिशंक्य न शिश्रिये कुरंगैः
प्रविमुच्यापि वनं दवाग्निभीत्या॥ ७०।

शिशिरा सुमु नक्तमालवीथी—
हतमध्यंदिनभानुभाप्रवेशाम्।
वसुधामधिशिश्यिरे महिष्यः
कृतरोमंथनवक्रमुक्तफेनाः॥ ७१॥

परुषार्करुचा विकृष्यमाणे [1]
वसुधायाः सति जीवने निविष्टाम्।
अपि तत्पजुरंगरेणवस्तां
सहिताः क्षुद्रतया हि नोचितज्ञाः॥ ७२॥

तृषिता इव पूषरश्मितापात्
पृथुगंत्रीपथपांशवो जनस्य।
अविशंश्चरणाभिघातवृद्धा
इव चोत्प्लुत्य शिरस्थतोयकुंभान्॥ ७३॥

---

१ द्रुमैः।

दिवसेषु विजृंभिते विपक्षे
    चलवत्यूष्मणि भानुमत्प्रतापे ।
निममज्ज भियेव शैत्यधर्मः
    प्रतिरुद्धार्करुचे प्रभाजलेषु ॥ ७४ ॥

अवलंबितदाममुक्तिजाला—
    ममृताभ्राविव रश्मिभिः प्रपूर्णे ।
पृथुभंगसमानशुभ्रशय्या—
    मधितिष्ठन्मणिहर्म्यगर्भगेहे ॥ ७५ ॥

विविधीकृतियंत्रकांतयंत्र—
    च्युतधाराशिशिरांभसां निपाते ।
मसृणस्फटिकस्थलीषु पश्यन्
    परिवृत्तिं नवमौक्तिकप्रकाशम् ॥ ७६ ॥

हरिचंदनदिग्धदिव्यमूर्ति—
    र्विपुलोरस्थगितोरुहारयष्टिः ।
विमृशन् करपल्लवेन कांता—
    कुचकुंभौ तदहर्निसर्गशीतौ ॥ ७७ ॥

मधुरध्वनिगंजमं विपंची—
    गुणकृष्टिप्रभवं नृपस्य पुत्रः ।
श्रवसोरवतंसयन्प्रपञ्च—
    स निदाघस्य निशांतिकप्रवेशम् ॥ ७८ ॥

निजसंगनिषिक्तसौख्यबुद्धि—
    र्विदलद्धंसकरम्मधृङ्निरुद्धः ।
नृपसूनुरिवेष गोपितानां
    व्यमुचद् घर्मजनेंगमः प्रवृत्तम् ॥ ७९ ॥

---

१ भोगसः ।

विरहज्वरदाहधूसराङ्गी
पथिकश्वासपरंपरेव दद्या ।
दिशि दिश्युदपादि मेघरेखा
स्वयमासेदुषि घर्मकालभंगे ॥ ८० ॥

सरसाकृतयः ककुप्सु मेघा
वभुरब्धेर्भुवनस्य घर्मतापम् ।
शमथुश्रमनैरिवापनेतुं
पृथुहस्ता इव दिग्गजेरुदस्ताः ॥ ८१

प्रथमोदितवारिवाहमुक्ता—
श्चिरमस्पृश्य निदाघदूषितस्य ।
जगतः प्रविशोधनप्रवृत्ता
इव शुंभज्जलबिन्दवः प्रपेतुः ॥ ८२ ॥

अकृतोच्छलदच्छपांशुपाता
पृथुपाथःकणसंहतिः पृथिव्याम् ।
क्षितिभागगताग्निशिष्टघर्म—
स्फुरदुच्छ्वासनिभानि सूत्कृतानि ॥ ८३ ॥

ककुभो मलिनांबरं दधानाः
कृतघोषाः कलुषं जलाशयं च ।
न घनाभिनिवेशतो न बभ्रुः
कृशिमानं गतभर्तृकाश्च योषाः ॥ ८४ ॥

प्रथितः पृथुभिस्तमालनीलैः
पवना भोग्यनोदितोपनीतैः ।
मदवद्भिरिव दिक्शीन—
स्वनिगर्भैर्जलदैर्मिथः प्रजह्रे ॥ ८५ ॥

पथिका मरणे मतिं ववंधुः
स्फुरदुद्दामतडिल्लतैकदंष्ट्रम् ॥ ८६ ॥

परितापहरं पयःप्रफेनं
प्रकृतप्यानमनेकभूरिधारम् ।
स दुदोह महीविवृद्धये गाः
समयः पीनपयोधराश्रितस्रः ॥ ८७ ॥

विरहासहनादिवांबुवाहे
मुहुरावर्षति पर्वतावतीर्णाः ।
पतिमभ्ययुरापगाः प्रवेगा--
ल्लहरीहस्तगृहीतपूगपात्राः ॥ ८८ ॥

स्मरतोमरतीव्रभेदविद--
ध्वनिता चित्तदिलानलोपजाताः ।
स्फुरदग्निशिखा इवोल्लिखंत्यो
घनकूटानि तडिल्लताः प्रसस्रुः ॥ ८९ ॥

वनिताहृदये तमोमयीके
रजनीभञ्जिकया मनोभवाग्नेः ।
ज्वलितस्य घनैरिवाचिरांशु--
च्छललीलास्र्चयः समुद्रभूवुः ॥ ९० ॥

चिरमस्थुरकामिनीकचेतः-
क्षयगृहा घनकालयासतोयाः ।
गृहदंतुदगुच्यमानपाथः
पृथुधाराः परिकीलिता इवोर्व्याम् ॥ ९१ ॥

अचिरद्युतिरक्तकर्दमर्द-
रिव कालेन विभिद्य खाद्यमानैः ।
कुरुमे व्यथया विवर्तमाने-
र्मुमुचे भूर्जिर्जलं भृशाकुलार्द्रैः ॥ ९२ ॥

कमलाकरमूर्जितप्रसादं
　　रसिकं संप्रविमुच्य मुग्धमत्स्यैः ।
अचिरादभिपातुकैर्वभूवे
　　भृतमुच्चैर्विषमं विषप्रवाहम् ॥ ९३ ॥

जलदैरभितः सदानभोगं-
　　रतिकर्मण्यगुणैर्निषिक्तगर्भा ।
अलिकीटगृहीतपुष्पगंधा
　　प्रसृते तथापि न केतकी फलानि ॥ ९४ ।

विततैरिव विस्फुलिंगवर्गै—
　　रुरुणाशावदनैरिरंमदस्य ।
वनभूरवकीर्णशक्रगोपैः
　　प्रवितस्तार भयान्यवल्लभानाम् ॥ ९५ ॥

अभिमानमुदस्य मस्तके का—
　　मनिदेशं न दधौ सवस्तुके का ।
वनितां मुमुचुर्निशम्य के का—
　　मपि मेघागमजां मयूरकेकाम् ॥ ९६ ॥

भुजगीरसिताः पयोदलेखा
　　इव मुग्धाः प्रमदेन भक्षयित्वा ।
विषवेदनयेव तीव्रयोगा—
　　दनुसंधाय कलापिनः प्रणेदुः ॥ ९७ ॥

जलदध्वनिनर्तितेन सद्यः
　　स्फुरदुत्तानितबर्हमंडलेन ।
शिखिनां निवहेन सर्वदिक्षा—
　　चलचित्रेव बभावरण्यभूमिः ॥ ९८ ॥

सतमालरुचेर्मनोज्ञभावं
नवदूर्वांकुरसंततिर्बिभेजे।
गलितामिलदंबुवाहभारा—
न्नभसः श्यामलतेव भूतलस्य ॥ ९९ ॥

प्रणिधाय शिखंडिनं पुरस्तात्
धृतधन्वा घनफल्गुनः सगर्जम्।
निजघान शरैर्निकामतीव्रै-
र्वरभीष्मं तरुणीजनाभिमानम् ॥ १०० ॥

स्खलितः कृतनृत्तनीलकंठः
स्फुरदुत्तंभितबर्हमंडलेषु।
अवधूनितमल्लिकामनोज्ञ--
प्रसवेऽनुद्रुतशब्दितद्विरेफे ॥ १०१ ॥

जलदः क्षरदांबवस्यवीयः
कणशैथिल्यविधानदृष्टदोषः।
अभिशप्त इव क्रुधा कणद्भि--
स्तृषितैरंबरचारिचातकौघैः ॥ १०२ ॥

स्मरमंदिरतोरणं जिहासो—
र्दयितानां परिवृत्तमूरुयुग्मम्।
शिरसीव निधातुमुद्दधानो
घनपाषाणमशेषदिग्मुखेषु ॥ १०३ ॥

विहरन्नखिलासु दिक्षु वायु—
र्वनितामानसतीरसंविमर्दान्।
अभिमानतृणांकुरानधाक्षी—
ल्लघुसंधुक्षितमन्मथानलेन ॥ १०४ ॥

---

१ स्मुभिन्दोः।

जलदागमनोचितस्तु सोऽथ—
युवराजं प्रमदासदोनिषण्णम् ।
रचितांजलिरित्युवाच कश्चिद्
वचनं हेतिगृहे कृताधिकारः ॥ १०५ ।

स्फुरदर्चिरुदग्रदीर्घलेखा—
प्रकराक्रांतनभस्तवाद्य चक्रम् ।
प्रविशन्नरदेव ! शस्त्रशाला —
महमद्राक्षमरातिदुर्निरीक्ष्यम् ॥ १०६ ॥

अमरैः परिवीक्ष्यते तदुच्चै—
र्मणिमौलिस्फुरदंशुचित्रलेखैः ।
प्रवहद्भिरिव प्रमोदहेतून्
सुरचापान्यपहृत्य वारिदेभ्यः ॥ १०७

जननाथ ! रथांगतो विभीता
इव चापं प्रविमुच्य मुक्तशब्दाः ।
मिलिता धनदस्यवो धनांते
पथिकप्राणहरास्तिरोभवंति ॥ १०८ ॥

चकितेव विधेयवर्णसीम्न—
स्तव हेतित्वमुपागते रथांगे
प्रविमुक्तनिशाविहारवृत्ति—
र्वसुधा पंकिलतामपोहतीयम् ॥ १०९ ॥

परिहेतिमयूखसीरकृष्टं
गगनक्षेत्रमिदं प्रसत्तितोयम् ।
तव देव ! यशस्यबीजवापा—
निव सर्वत्र बिभर्त्ति राजहंसान् ॥ ११०

१ शस्त्रागारे । २ इंद्रधनूंषि । ३ चक्रे । ४ बीजक्षेत्राणि ।

देव ! अयोदश परेऽपि परोपताप—
काले प्रभावमहिमोदयहेतवस्ते।
अन्वागताः सपदि चक्रधरस्य चक्रं
कुर्वंति रत्ननिधयो विविधांगलक्ष्मीम् ॥ १११॥

ालं दिग्विजयोद्यमस्य शारदं दिग्याखिलक्ष्माभृतां
चेतोजर्जरणप्रभावमहितं चक्रादिरत्नागमम्।
स्यैवं भवतः प्रमोदविकसच्चेतोरपलश्रीर्नृप—
श्चक्रे नैकमहस्रवस्तुनिवहैस्तृष्णाकुटीपूरणम् ॥ ११२॥

इति श्रीवादिराजसूरिविरचिते श्रीपार्श्वजिनेश्वरचरिते
महाकाव्ये वज्रनाभचक्रवर्तिचक्रप्रादुर्भावो नाम
पंचमः सर्गः।

---

# षष्ठः सर्गः ।



विधिप्रसिद्धां प्रविधाय पूजां
चक्रस्य चक्री स बली बलेन ।
क्रमेण दिक्चक्रजयाय जिष्णु—
र्जगाम कामार्चितजीवलोकः ॥ १ ॥

अरातिभूपालसमूहभीति—
स्फुटन्मनःशैलरवस्य शंकाम् ।
व्यधत्त पुंसां नरलोकभर्तुः
प्रस्थानशंसी पटहप्रणादः ॥ २ ॥

जिनेश्वराभ्यर्चनपुण्यतंदुलैः
समं स दिष्टं जिनशासनद्विजैः ।
सहर्षमाशीर्वचनं समग्रहीत्
भवंति भव्या हितवस्तुवेदिनः ॥ ३ ॥

लावण्यपल्लवभृतो मुखदर्पणांका—
न्मांगल्यपूर्णकलशानिव वारयोषाः ।
आवेद्यंश्च वसुधेशमनाशकीर्त्ति
कार्त्तस्वरच्छविकुचारकुचान् दधाना ॥ ४

कमलोद्वहि दूरमुज्जिगांसौ
रथमासेदुषि तत्र पार्थिवार्के ।
अभवत् सुमहोदयः पुरस्ता—
दनुरागोल्वणसुप्रसन्नदिकः ॥ ५ ॥

अनेकदिग्भेदविदर्कबिंब—
मार्गोपदेशप्रतिपन्नकृत्यम् ।

---

१ उच्चारितम् । २ कमला लक्ष्मी कमलं पुष्पं च ।

प्रभाचिनस्तस्य भयादिवाग्रे
चक्रं प्रभामालि चचाल भीमम् ॥ ६ ॥

चक्रप्रभावेन नृपस्य तेजो
निवेदयमानं निखिलासु दिक्षु।
उल्काच्छलेनाहितभूपतीना-
मुत्रासयामास विलोचनानि ॥ ७ ॥

छत्रच्छलेन शुचिशारदमभ्रमुच्चै-
रन्यप्रभामुपरि चक्रधरादसोढुम्।
एकांवरानुगमबंधुतयेव भानुं
छायासुधामधुरमावृतमभ्यरक्षत् ॥ ८ ॥

ऋजुवक्रतया पिशंगकृष्णौ
प्रकृतिस्थूलकृशौ च दंडखड्गौ।
क्षितिपस्य निदेशकाम्ययेवा-
चलतामग्रपदे मिथोऽविरुद्धौ ॥ ९ ॥

तस्य पार्थिवपतेरभिपार्श्वं
चामरे प्रचलिते हिमशुभ्रे।
कायकांतिविभवामृतसिंधो-
र्वीचिविभ्रममरुच्चं व्यदधाताम् ॥ १० ॥

निष्टमहाटककचिः कटकावभासी
सोच्छ्रायमूर्तिरनिलंघितसर्वतेजाः।
रेजे स रत्नमुकुटेन यथा सुमेरु-
स्तारागणेन शिरसि प्रतिगुंजितेन ॥ ११ ॥

सकलवसुधानाथे तस्मिन् जयाय दिशां तदा
चलति तदरिव्रातायामप्रधानकृतागसः।

---

१ मनुगमूहनिचागद्दानादपराद्धाः।

प्रियानवेक्ष्य पुरस्थिता नृणां
प्रदर्श्य पादान् मणिनूपुरावहान् ।
अयांबभूवुः सुभगाः पुरंध्रयः
सलीलमुद्दामकरेणुवाहिताः ॥ २५ ॥

भग्नैरनोभिरतिभारवशान्मदांधै—
रुद्धे नु वर्त्मनि गजैरपि कृच्छ्रनेयैः ।
दुःखेन तस्थुरितरे भरभुग्नकंठा
पाश्चात्यहस्तिकरसीकरसिक्तपृष्ठा ॥ २६

कुसुमसुरभिगंधि तोयमन्नं
शकटभृतं सततं बुभुक्षितेभ्यः ।
अभिरचितमनुक्रमादयच्छ—
न्नपि वनवर्त्मसु चक्रिणो नियुक्ता ॥ २७

परिप्लुतहयावलिस्फुरितहेमपर्याणकच्छवि—
प्रसरपिंगलाश्च ककुभोऽपि वभ्राजिरे ।
भयादिव जिगीषतस्सकलचक्रिणस्सश्रियं
विचन्नुरभितृप्तये कनकवृष्टिमिष्टामिव ॥

आनीलविग्रहमहोन्नतिचुंबिताभ्राः
सिंदूरपद्धतिभृतो भृतधातुरागाः ।
नागा नगाश्च गमनागमनप्रवृत्त्या
भेदेन संबुबुधिरे पथि मानवौघैः ॥ २९ ॥

वनगजमदावेशोदीर्णकुधस्तदकुर्वत
क्षितिपतिगजा धावंतस्ता दिशो दलितां
कृतकलकलं भ्रश्यद्भारं भयादनडुत्कुलं
पथि यदनुनिभ्राम्यद् गोपव्रजं प्रपलायते

१ आलिभ्रय ।

मायूरपिच्छरचितोल्लसदातपत्र-
च्छायावृतैरनुगमागधदत्त्वगीतैः।
अंदोलकैः सुरभिचंदनदिग्धगात्राः
केचित् सुखालसदृशः प्रययुर्महीदाः॥ ३१॥

वस्तुसारनिवहं प्रतिपाद्य
प्रीणितेन विजयातनयेन।
तत्प्रयोजनकृतस्सह तत्त—
न्मंडलाधिपतयः प्रविचेलुः॥ ३२॥

पामरैः स ददृशे भयादुप—
ग्रामवर्तिभिरुपेत्य चक्रभृत्।
क्षेमदः सुरभिशालितंडुल—
स्तोमहेमनिवहाद्युपायनैः॥ ३३॥

केचिदेवमवदन्सुहृदो वा—
लातपे व्रजत वर्त्म दवीयः।
दीर्घिकातटभुवः सहकारा
विश्रमाय पुरतोऽपि भवंति॥ ३४॥

तीरे भूरिद्रुमवति वधूबंधुभिर्भोजनांते
विश्रांतानां क्षणमनुचराः पद्मिनीपत्रगूढम्।
अंभः शुभ्रं सविसचलयं पद्मजालं सनालं
तास्यत्यांशौ पथि धनवतामाहरन् दीर्घिकाभ्यः॥ ३५॥

बृहद्घंटारावाः पृथुलधवलांगा वलयभृ—
द्विषाणाः सिंदूरच्छविरुचिरचूडादृढवलाः।
वराद्यालंकारा यवसभरमूढा क्षितिपते
न रुद्धा हो धत्त्वावरुत्यपि तत्क्षणे सेनार्णवे॥ ३६॥ (?)

( संति चलाति चक्रधरप्रभावः। )[1]

पुरस्तात् प्रस्थानो पटुसुभटसेनायुधमया—
वखंडप्रारंहो रणशिरसि दंडौ विजयिनः।
व्युदम्य स्वस्थानादनवनतमूर्द्धसु महतो
द्विभेदान्यश्येतां स्फुटमवनतेपु क्षितिभृतः ॥ ३७ ॥

चक्री स एवं बहुभिः प्रयाणै—
रक्तामगादुद्धलभंगकारी।
हंसावलीनिस्स्वनमुग्धवाचा
तस्यैव सा स्वागतमभ्यधत्त ॥ ३८ ॥

भंगोच्छलच्छिशिरशीकरजालमब्ज—,
किंजल्कपिंजरितमर्घविधेव बिभ्रत्।
अभ्यागतं क्षितिपमभ्युदयाय वायुः
सिंधोः स्फुटध्वनिमधुनर्तडिडिमोघेः ॥ ३९ ॥

प्रोल्लसत्कमलमुन्मदेभमु—
लोलहंसधवलध्वजं जलम्।
चक्रिणश्च बलमभ्युदद् यया
विभ्रमादुभयतो नदीतटम् ॥ ४० ॥

स्फुरन्मणिशिलातले सुरभिवल्लरीमंडप—
च्युतप्रसववासिते मरुति वाति नद्यास्तटे।
प्रियाधरमधु श्रमाच्चि निपीय मार्गांगना
निशाधमुरलिभ्यगः सुरनिर्मीलिताक्षाः क्षणम् ॥ ४१

यावद्दिष्टमितनेत्रपुष्टि—
स्पर्शयेव मधुरः फलवर्गः।
चक्रवर्तिकटकाय विभेजे
तत्तटीमणितटद्रुमखंडैः ॥ ४२ ॥

---

१ शोभादधिरं प्रपद्यते २ नदीम।

क्षितिपतिमवलोक्यैवागतं दिग्जयाय
स्वयमधिकमयोक्ता वर्त्मयुक्ता च रक्ता ।
स्फुटमित इत पहील्यावदंती शकुंत—
ध्वनिभिरिव पुरस्तात् गच्छ गच्छेत्यगच्छत् ॥ ४३ ॥

आसीद्गतसकलजनोत्सवेन गच्छन्
भूनाथरत्नुनदि रम्यवर्त्मनैवम् ।
उद्योगस्थगितमनाः स चक्रवर्ती
शीतोदानिकटमगादगाधशौर्यः ॥ ४४ ॥

तस्मिँल्लघुस्थपतिनिर्मितमूर्मशुभ्र—
प्रासादमालि नगरं नरलोकपालैः ।
गच्छद्भिरेव कृतविस्मयमालुलोके
साट्टालशालमणिगोपुरसुत्पताकम् ॥ ४५ ॥

विभज्य सेनापतिपारिपार्श्विकाः
परिभ्रमंतो भृतवंशायष्टयः ।
परीत्य चक्रेश्वरवासमंदिरं
नियानयामासुरिलातलेश्वरान् ॥ ४६ ॥

अग्रप्रधावितकशाकरसौविदल्ल—
कन्यारिलेषु नृषु शिल्पिविशेषभाजः ।
विद्युल्लता इव घनादवतीर्य यानाद्
देव्यो यथास्वमविशन्नृपमंदिराणि ॥ ४७ ॥

कश्चित्तुरंगमनताः स्वयमप्रभूत्वा—
दभ्यर्थितेस्तु दयितैरवरोप्यमाणाः ।
भीत्येव चारुकुचपीडितवक्षसस्तन्—
कंठेषु गाढयिधिवादुलता बबंधुः ॥ ४८ ॥

---

१ मदिरा ।

आश्लिष्य कंठमवरोपयतुस्तुरंगात्
कांतस्य तच्छ्रयसि काचिदवोचदेवम् ।
स्पृष्ट्वा तु मच्चरणयोः कठिना धरित्री
पीडां तनोति नय तत्स्वयमेव शय्याम् ॥ ४९ ॥

गलद्गात्रस्वेदा व्यजनकमरुत्संगसुहिता
दवीयोऽध्वश्रांताः क्षणमनवरूढा हयकुलात् ।
विपश्यंतस्तस्थुर्निजभवनरम्याजिरगतां
यथास्थानं सेनामभिनिविशमानां क्षितिभृतः ॥ ५० ॥

अध्वक्लमापगमरम्यविधानवेषा
वास्तव्यतामिव गता नगरस्य वेश्याः ।
आकस्मिकस्मितकथानुनयैर्भुजंगान्
प्रत्यग्रहीषुरविकल्पितमध्वखिन्नान् ॥ ५१ ॥

त्यक्तायोगागलितबहलस्वेदचिक्कणपृष्ठाः
स्थूरपृष्ठाः क्षितिविलुठनालब्धकंडूतिभंगाः ।
एकैकस्थैरधिकृतजनैः पातुमंभस्तृषार्ता
जग्मू रक्तां करगतदृढप्रग्रहैः कृष्यमाणाः ॥ ५२ ॥

जयैषिणश्चक्रभृतो भयात् ध्रुवं
करैरनाक्रम्य दिशस्तदा रथी ।
प्रतापहीनो धनवर्त्म मंडला—
दधावदस्ताचलमस्तकं रविः ॥ ५३ ॥

स्कंधावारं प्रविशति तदा भर्तरि क्ष्मापतीनां
नांदीनादः पणवतुणवाद्युद्धनिध्वानमिश्रः ।
तेजोभंगं दिनकृत इवोद्धकुमाशासु गच्छं—
स्तत्रस्थानामकृत करिणां कर्णरंध्रेषु पीडाम् ॥ ५४ ॥

---

१ दिक्षु ।

मणिमयतटभित्तौ तीव्रवेगाभिघातात्
ध्वनति बधिरताशं निम्नगायास्तरंगे ।
विवृतगलगृहरकं बृंहितं श्यामशैलाः
प्रतिरवमिव चक्रुश्चकितसेनागजेंद्राः ॥ ५५ ॥

आसन्नमस्तमयमात्मन एव दृष्ट्वा
वक्षस्थलादिव भयस्फुटिताद् गलद्भिः ।
रक्तैर्विलिप्त इव पाटलितो बभूव
वृद्धो रविः करधृतद्रुमदीर्घशाखः ॥ ५६ ॥

जनपतिरथचक्रनेमिवाजि—
व्रजखुरघातसमुत्थितः प्रलेपम् ।
* ध्रुवमवहदरज्यत प्रतीची
यदविरलैरपराद्रिधातुचूर्णैः ॥ ५७ ॥

गिरिपृथुलकुचोपगूढभास्वद्—
विटवपुरुद्धविलासिनीव संध्या ।
कवलितपृथुवारुणीप्रभावा—
दिव परिपाटलदर्शना बभूव ॥ ५८ ॥

कृतसमयमसंगं प्रेयसीखर्वसोढुं
तदनुगहृदयत्वादक्षमाश्चक्रवाकाः ।
विविशुरिव विषादादुज्ज्वलंतं कृशानुं
प्रसृतकपिलसंध्यारागसंपर्कापिंगाः ॥ ५९ ॥

आरब्धहंसमधुरध्वनिजाप्यमंत्र—
स्तत्कालकुड्मलितपाटलपद्मपाणिः ।
अंभःशुचिर्विपलतारचितोपवीतः
संध्यामिव स्वयमवंदत पद्मखंडः ॥ ६० ॥

---

१ मदम् ।

विमुख इति विवेकी नेति दुर्वारदर्पा—
वह इति वरहारीत्युद्धतश्चेति नित्यम् ।
कमलमुखितयाराद्वक्षसश्चेद्वराकः
स कथय कुचयोस्ते किं न ते संति धर्माः ॥ ७२ ॥

पीडासहं मधुरमव्यतिरिक्तरागं—
मावद्धचुंबनरुचिं रतिनाट्यरंगम् ।
तं चेन्न वांच्छसि मुखान्वितवस्तु नाम
विस्तारमृच्छति गुणस्स तवाधरेऽपि ॥ ७३ ॥

निर्मलश्रवणसंगमनंगो
वृंहणच्छविमतुच्छविलासम् ।
कांतमाक्षिपसि यद्युत्पन्नं
किं न ते तरुणि तादृगपांग ॥ ७४ ॥

स्वभावमलिनस्थितो शुचिरहेतुवक्राकृतो
व्रज स्वरसगंधतृप्तमधुपे सतामाश्रयः ।
निसृष्टरतिनिग्रहे सरति नायकः स्निग्धया
घटेत यदुपेक्षते सुदति केशवेषे त्वया ॥ ७५ ॥

किमिति तरुणि तस्मिन्नंजनन्यासमन्यं
रचयसि तव सिद्धयेदन्यथा कामसिद्धिः ।
स हि तव मृगनेत्रे नेत्रगर्भस्थितः स—
न्नपि भवति निमित्तं त्वन्मुखश्यामतायाम् ॥ ७६ ॥

शुचित्वमपि तस्य विद्धि वचनान्मम प्रत्युत
स्त्वमेव सुभगे शुचिः कुचभरावमर्शोचितम् ।

---

१ दुर्वारदर्पावह दुर्वारं निवारयितुमशक्यं यद्दर्पं गर्वस्तं वहतीं
२ अव्यतिरिक्त अपृथग् रागोऽनुरागो यस्य तम् ।

यदुद्वहसि वक्षसा रुचिरहारमच्छंस्फुरन्—
मयूखमुखचुंबिताधरमसौ कांतसंबंधिनी ॥ ७७ ॥

इति सखि कथयेव तमोमुचा
युवतिरात्मवती दयितागमे ।
अकृत बुद्धिमधिज्यंशरासने
निशि समीपगते कुसुमायुधे ॥ ७८ ॥

शयिता सखीरपि विसृज्य वधू—
रतिकौतुकेन शयनेऽधिनिशाम् ।
दयितस्य च द्रुतमनागमना—
दमिमीलदंगकुपितेव दृशौ ॥ ७९ ॥

तीव्राभिषंगमतिपात्य रतस्य कालं
बाला प्रियस्य निशि काचिदुपस्थितस्य ।
क्रोधोदयादनुनयादवधीरयंती
पादप्रहारमकृतोरसि यावकांतम् ॥ ८० ॥

आगता प्रतिनिवृत्य वेश्मनो
वल्लभस्य निशि साभ्यसूयया ।
कांतयेति नवभोगलांछना
संफलीवचनमभ्यदीयत ॥ ८१ ॥

संख्यं दूति यदावयोरविविधत्तत्रापि मत्प्रेयसी
तत्सज्यं प्रतिपन्नमद्य यदयं मद्देहदेश्यं व्यधात् ।
प्रस्वेदार्द्रमुखं नखक्षतकुचं निर्दिष्टदंतच्छदं
तांबूलांकविलोचनं तव रतिव्यत्यस्तवस्त्रं वपुः ॥ ८२ ॥

---

१ अच्छं निर्मलमत एव स्फुरंत. देदीप्यमाना· ये मयूखा. किरणानि तान्येव मुखानि तैश्चुंबितमधरं दलच्छदं येन तम् । २ तमोमुचा चंद्रेण । ३ अधिज्य-मारोपितं शरासनं धनुर्यस्य तस्मिन् । ४ अतिचापल्येन । ५ नवं च तत् भोगं तस्य लांछनं चिन्हं यस्या सा ।

घनतमसि निवासे सन्निधाने सखी मां
युवतिरधरबिंबे चुंब्यमाना प्रियेण ।
उपनतरतिलोपं दीपमुद्दीपयंतं
परिजनमुदितेर्ष्यारूक्षमीक्षांबभूव ॥ ८३ ॥

वनिताश्लथनीविखंडवासा
शिशिरभ-स्नपिता भियेव शीताद् ।
वृणु मां वृणु मामिति प्रयंती
शयनस्थं परिषस्वजे स्वमीशम् ॥ ८४ ॥

योजयन् जघनमंडले दृशा
वल्लभः प्रमदया विवस्त्रया ।
संभ्रमत्कुचभरावनुद्धव –
श्च स्खला युवतिरपीड्यताधरे ॥ ८५ ॥

अनुनयकलिवल्लभे कृताग—
स्युचितमिवावयती जगाम लज्जाम् ।
अनुनिशमभिमानबंधभंगा-
दिव युवतेरशिथिलीबभूव नीवी ॥ ८६ ॥

रागी वियोगमसहन्निव रात्रिमिंदु-
र्मुक्त्वा मुहूर्तमवनीप्रथितप्रदोषम् ।
तस्याः प्रसादनमिवैणकमुद्वहत्ता—
मन्वेष्ट काम इव गोत्रमध्यरोहत् ॥ ८७ ॥

हिमांशुरुद्यत्फणचक्रवालं
शेषोरगस्यैणरत्नदीप्तिः ।
भुवो भृता यं स्वयमन्विपाय
प्रभामिवोद्वीक्षितुमुत्थितस्य ॥ ८८ ॥

---

१ उपशमूयया । २ मृगजाति । ३ शेषनागशिर स्थितरत्नस्य दीप्तिरिव कांतिरस्येति उपमितवृत्ति ।

पिशंगमंगैः शुशुभे हिमांशो-
विंबं गिरेः शृंगविलंबि रात्रौ ।
तत्कालसाम्राज्यकृते स्मरस्य
प्रापोदयस्येव सुवर्णपीठम् ॥ ८९ ॥

मदावहारक्तचकोरनेत्रा-
मुद्भासयन् ध्वांतविसारिवासः ।
निशामिवालिंगितुमंगरागी
प्रसारयामास करान्मृगांकः ॥ ९० ॥

मुदं मृदिम्ना जनयन्जनानां
करैश्चिरं मंडलरागरूढः ।
राजा मघोनोऽपि विलंघ्य काष्ठा-
मध्यास सौधोदयमद्वितीयम् ॥ ९१ ॥

दृढतिमिरसमग्रव्योमगर्भावकीर्णा
विरलविधिकर्मिदोरश्मयः कुंदशुभ्राः ।
सरसि रसवियोगात्पंकमात्रावशेषे
विततमृदुमृणालीविभ्रमं विभ्रते स्म ॥ ९२ ॥

आपीप्यदमृतद्युतिर्विदलिताननामुच्छम-
त्तरंगशयनां शनैः कुमुदिनीं विभक्तांबरः ।
करग्रहसमर्पितं नवसुधारसं सुंदरी-
र्युवापि मधु मानवो रुचिरहंसतूलाश्रयः ॥ ९३ ॥

अभिनवरुचिमात्मनि प्रसक्तां
स्मरकृतमिंद्रदिशः स्वयं धयद्यः ।
वरचंपक इवोत्पलीविशुद्धे-
र्हिमरुचिरंकभृदावभावदभ्रः ॥ ९४ ॥

---

१ मृग अंके क्रोडे यस्यासौ इंदुरित्यर्थः । २ रसवियोगात् जलराहित्यात् ।
३ श्रेष्ठमयमित्यर्थः ।

शुक्लान्वयादुज्झितरागबंधो—
ज्योतिर्विमानेन जगद्विभंजन् ।
अनेकधा लक्ष्मविवादभूमि—
र्जगाम निर्मुक्त इवेंदुरूर्ध्वम् ॥ ९५ ॥

कांतस्य शांततमसो हरिणांकमूर्तेः
प्रत्यागमे सति मुदेव कुमुद्वतीनाम् ।
हासश्रियेव रुचिपल्लवितोल्लसंत्या
सांद्रक्रमं नभसि चंद्रिकया प्रतस्थे ॥ ९६ ॥

हिमद्युतेर्बालतमा मयूखाः
कोलाहलं हंसरवैर्दधानाः ।
संक्रीडनायेव समं निपेतु
रक्तासरित्संगतसैकतेषु ॥ ९७ ॥

राजासि चंद्र विवशास्मि रवेर्वियोगा—
त्तन्मां कुतः स्पृशसि निश्रियमंग रात्रौ ।
इत्याबभाण बिसिनी ध्रुवमात्तशोका
कोकस्वरैर्मुकुलितारुणपद्मपाणिः ॥ ९८ ॥

ज्योतिर्द्रुमांश्चंद्रमसः प्रभायां
न हि व्यशिष्यंत वनद्रुमेभ्यः ।
राजप्रभावो ननु तादृगेव
तत्संनिधौ यत्समता परेषाम् ॥ ९९ ॥

विवृतवदनमुद्रा नीलनीरेजराजि—
स्तरलमतरदंतैर्निस्वनन्ती द्विरेफैः ।
तिमिरविततिरुच्चैरिंदुना रश्मिबद्धा
सरिति सुभृतवारि व्योमतः पातितेव ॥ १०० ॥

---

१ व्यशिष्यंत विशेषं प्रापु । २ राजसमीपे । ३ नीलकमलपंक्ति ।

सौधावली दूरपथप्रयाणा-
दिव श्रमार्ता निशि चंद्रपादाः ।
संभूय मंदागतमारुतायां
विशश्रमुः स्पृष्टवधूनितंबाः ॥ १०१ ॥

सरस्तरंगामलतल्परूढा-
श्चंद्रातपे चुंबति पंकजिन्यः ।
आनंदयोगादिव सानुरागा-
न्यमीलयन्नंबुजलोचनानि ॥ १०२ ॥

शुचिस्मितैर्वामविलोचनानां
प्रहासगोष्ठ्यामभिनंदमानः ।
बभूव रागादिव पीवरात्मा
मृगांकरश्मिप्रसरो निवेशे ॥ १०३ ॥

लीलाविलोलनयनोत्पलभृंति सौध-
शृंगे शशांकरुचिमंति मदोपकंति ।
कामातुरा युवतयः स्वधयन्मधूनि
तासां मुखानि समखानि पुनर्युवानः ॥ १०४ ॥

अवेक्ष्य मूर्तिं मधुनि स्वकामिति
व्यतर्कयत्काचन कर्कशस्तनी ।
अहं निपीतास्मि किमंग हालया
मयेव रागात्प्रतिपासितव्यया ॥ १०५ ॥

अतिपानविधेरगृध्नुमेका-
प्रियमुद्दामसुगंधिकापि शेये ।
अधरप्रतिबिंबदर्शनेन
स्पृहयालुं विदधे पुनर्विदग्धा ॥ १०६ ॥

---

१ प्रासादपंक्त्याम् । २ अपिबन् । ३ सुरया ।

हरिणदृशां मुखैः सह निशोदितशीतरुचिर--
फलदफल्गुबांधवममीभिरमा ।
यदयं मणिमयभाजनस्थमदिराभृतवारि
मिलन्नलुठदनल्परागसुहृदिप्रतिबिंबगतः ॥ १०७ ॥

ध्रुवं वधूवल्लभकंठगह्वरा--
द्गृहीतहालामदशक्तिरुद्गता ।
विमोहनं देहभृतां व्यधत्तत --
त्सरस्वती गीतमयीश्रुतिं गता ॥ १०८ ॥

दृढतरपरिरंभणच्छलेन यूनां
कुचभरमुद्वहतामिव प्रसन्नाः ।
अधरमधु नतभ्रुवो वितेनु--
स्तनुतनवस्तनुमध्यखेदहेतुम् ॥ १०९ ॥

वधूवरान्मधुमदनि_त्प्रियः
स्मरो मुदा भरतरसक्रियागुरुः ।
अयोजयन्निधुवननृत्यकर्मणा
समुल्लसद्गरल्लतालयोजनः ॥ ११० ॥

अचिह्नितान्वामदृशः प्रयस्ताः
प्रस्वेदतोयैः पुरुषायितेषु ।
वक्षांसि वल्गत्कुचकुंभमुक्त--
मूर्तेरिव प्रेमरसैः प्रियाणाम् ॥ १११ ॥

रतिक्रियागममिकप्रवृत्त--
स्त्रीपुंसलीलालयकंठशब्दाः ।
अन्यक्रियंतेव समं स्वक्षौ--
रक्तासरिद्धारिणि चक्रवाकैः ॥ ११२ ॥

जन्मथ शिरसि स्थितो मृगांको
मदनकरो हतरूप्यकुंभतुल्यः ।

रतिरसभरभिन्नमानवाना—
मुपरि सुधामिव चंद्रिकां मुमोच ॥ ११३ ॥

दीर्घप्रसारितकरेण गुहागृहेषु
संक्रीडनार्थमिव चंद्रमसा विकृष्टा ।
जारेण रात्रिरपराद्रिमियाय गुप्तं
सुप्ते जने ध्युग्रहे पश्चिमदेशभक्त्या ॥ ११४ ॥

उन्मुच्य सन्मार्गमुदग्रमुच्चै-
राजानमाराधितवारुणीकम् ।
अत्यक्तवर्त्मा श्रवणानुवर्ती
नक्षत्रलोकस्तमनु प्रतस्थे ॥ ११५ ॥

सदृशं हि भृशोल्लसन्मनोभू—
रभिगच्छन्नपरां तुषारधामा
वहते स सुधागृहाग्रसुप्त—
प्रमदानां जघनानि यत्करौघैः ॥ ११६ ॥

गाढरतियंत्रतया सुरतिक्रमेण क्षतिभिर्वनिता ।
परिरभ्य दृष्टमधुरोष्ठमणीर्निभृतं निशापरिणतौ सुषुपे ॥ ११७ ॥

गृहेषु रात्रावमयरक्षणार्थं
निद्रालुरोधेऽपि चिराभियोगात् ।
पुरस्सरक्रव्यनिजस्वराणा
समुद्बभुर्युगपत्प्रघोषा ॥ ११८ ॥

अश्रांतवांतमदसारभलोभसंगि—
भृंगस्वनैरिव सुखप्रतिरोधभाज ।

---

१ चद्र, नृप च । २ वारुणी सुरा, उत्तरदिक् च । ३ न त्यक्तो मार्गो [illegible] सन्मार्गानुयायीत्यर्थ । पक्षे—न त्यक्तो मार्गो येन समार्गानुयायीत्यर्थ । ४ पक्षे—क्षत्रियममुहेनेति भेद । ५ निरन्तरप्रवाहितस्येत्यर्थ ।

आलानधामदृढशृंखलदत्तधशब्दाः
शय्यां विमुच्य शनकैरगमन्गजेंद्राः ॥ ११९ ॥

शिथिलय कलकंठि कंठदेशात्
भुजवलयं ललिते ! मम क वस्त्रं ।
परिणतिमगमन्निशा यदेताः
शकटरवैः श्रवसी तुदंति रथ्याः ॥ १२० ॥

संभूय संभृतलयाः प्रवदंति तांम्र—
चूडाः सनीडरतयस्तदहं व्रजामि ।
तन्वंगि यन्मयि समाश्रितभृत्यभूये
भूयः प्रसादविधिरेष विधायिषीष्ट ॥ १२१ ॥

विश्रंभात् प्रियनवसंगमेऽपि चेतः
सर्वस्वं त्वयि रमतो मयान्यधायि ।
आनेयं मम पुनरप्यदो निशीथे
तत्स्वेच्छागृहमिदमभ्युपेहि मा वा ॥ १२२ ॥

चेतोवृत्तिर्विपुलविलसद्रागरत्नावतंसा
साऽतो योगानियतजडिम । न प्रपीडां तनोति ।
भोगिन् क्रीडाकुशलभवता यद्युपेक्ष्यंत काले
व्यालच्छाया विरचयति मे दुःखदोषं प्रदोषम् ॥ १२३

इति विटकुलटाजनस्य जैत्र—
स्मरशरभीतिकरे वियोगभारे ।
उपनतवति रात्रिपश्चिमांते
प्रणयगुरुर्वचनक्रमो बभूव ॥ १२४ ॥

आलिंगनोद्वहनमंडलितेषु कांतैः
कांताकुचेष्वनवकाशतयेव रात्रौ ।

१ शृलरवे ।

सौख्यं प्रपद्य कमलेषु निशावशाये
तत्रोन्मुखी पुनरभून्नवकुड्मलश्रीः ॥ १२५ ॥

किंचिन्निमीलदसितोत्पलनेत्रकोटि—
निर्यत्तुषारकणिकासु कुमुद्वतीषु ।
कांते विधौ विधिवदस्तसमीपयाते
शोकप्रलाप इव भृंगरवो बभूव ॥ १२६ ॥

हिमरुचिसमये प्रसंगदैर्घ्या—
दुपरि विहारिणि दूरतः प्रयाते ।
मकुलितकुमुदेक्षणा कुमुद्व—
त्यधिवसति स्म सरस्तरंगशय्याम् ॥ १२७ ॥

प्रियविरहमहेलाशोकनिश्वासदाव—
प्रसरमलिनमुञ्झन्व्योम चंद्रस्तपस्वी ।
तरुणहरिणवाही दाहभीतेरधाव
त्त्वरितमिव समीपं पश्चिमस्यार्णवस्य ॥ १२८ ॥

आलिंग्य वल्लभतनू रथिचक्रसंधि—
निद्रायिता विकचवारिजगंधबंधौ ।
वक्षेषु शुद्धिमदधुर्जघनच्युतेषु
प्राभातिके मरुति याति विलासवत्यः ॥ १२९ ॥

समवसत परस्परेण दूर—
मसहतया निशि लब्धभोगपीडाः ।
वरयुवतिकुचा विभातकाले
समदमुखोन्नतयश्च चक्रवाकाः ॥ १३० ॥

* रात्रौ शीतमयूखदोषभुजगाद्विर्विषोद्गारिणो
भीतेवार्कवियोगिनी कमलिनी निद्राछलान्मूर्छिता ।

---

१ राम्यमाने । २ प्रस्फुटितकमलसुरभिवाहिनि ।

तस्मिन् कंधरकाललक्ष्मणि गते शोणाब्जशुंभन्मुखे—
रुज्झतश्वासनवप्रभातमरुता लब्धेव संचेतनम् ॥१

श्रीर्बंधकी निशि सरोरुहगेहगर्भा-
द्दोषाकरेण कुमुदाकरवेश्म नीता ।
भास्वात्प्रियस्य पुनरागमनाद्भियेव
प्रत्याविवेश पुनरंबुरुहं प्रभाते ॥ १३२ ॥

अनुविधिमधिकप्रभाविनस्ते
चकित इवैप करादिहो विधातुम् ।
अवसरमवनीश्वर प्रतीच्छन्
गिरिशिखरांतरिताः खरांशुरास्ते ॥ १३३ ॥

भूयसून्मुखमिलितोरुहारयष्टि
निर्भजन्विसलतिकामिव प्रजग्धाम् ।
वामोरूघनकुचभारचक्रवाको
व्युष्टायां निशि नृपचंद्र मा पिपीडाः ॥ १३४ ॥

निधुवननिधिमुख्ये मौखमग्रे सखीनां
स्वगरुवदतिशब्दं खंडशस्तां प्रतुंडे ।
अवनतवदनाब्जां लज्जया देव ! देवीं
दरहसितमनोज्ञां पश्य पर्यंतदृष्ट्या ॥ १३५ ॥

अन्वेष्टुं निजनियमं तमोऽपहारे
ये रात्रेरखिलकलाःसुजागरीताः ।
प्रत्यग्रोन्मिषिर्मिविद्दशा त्वया त एते
दृश्यंतां नृप कुलरत्नदीपाः ॥ १३६ ॥

अखिलदिक्पतिभिः प्रतिवाहितां
नयनपद्मविकाशमियं तव ।

---

१ नियमं प्रति । २ दिवसम् ।

अभिनिवेष्टुमिवांगणतोरण—
स्थितवती कमला प्रतिवीक्षते ॥ १३७ ॥

तेजस्विनः स्वमदशाभृतस्ते
ये प्रत्यया दृष्टिपथप्रयाताः ।
भयादिव भ्रांतिमथो यथोक्तां
कुर्वंतु ते सर्वजनीनसिद्धिम् ॥ १३८ ॥

प्रस्वेदांबुलवान् मुखादपनुदन्नामीलयन् लोचने
सोल्लासामलकावलीं विलुठयन् भंजन् नितंबस्थलम् ।
नारीणांसुरतावसानसमये कामीव कुर्वन्प्रियं
प्रीत्यै देव ! तवांतिके प्रसरति प्राभातिको मारुतः॥१३९॥

तनुजिनपतिपादद्वंद्वता त्वारविंदं
विकसदनवसाने मानसे तत्र भूयः ।
सरलसरसचेताः श्वेतलक्ष्मीविलासे
स्वमवनिपतिहंसो हंसलीलां भजेथाः ॥ १४० ॥

इत्याविष्कृतपंचमध्वनिवचः श्रोत्रामृतं श्रीपतिः
पीत्वेव प्रतिपन्नबोधविभवो मंद्रागतं वंदिनाम् ।
उत्तस्थौ शयनाद्विकीर्णकुसुमभ्रांतालिकांतारवैः
चक्री विक्रमभोदरः स्वरविहार्दीत्येव फूत्कारिण॥१४१॥

इति श्रीवादिराजसूरिविरचिते श्रीपार्श्वजिनेश्वरचरिते
महाकाव्ये वज्रनाभचक्रवर्तिप्रबोधो नाम
षष्ठ सर्ग ।

---

१ प्रात ।

# सप्तमः सर्गः ।



*तमोमहिषमाहत्य बलिहारं दिशामिव ।
तस्यासृग्भिश्चकारार्कः प्रसरल्लोहितच्छविः ॥ ८ ॥

भानुमत्करसंवाहादुत्थितायास्तदा श्रिय ।
भ्रमरैः कमलावासे मंजीरैरिव सिंजितम् ॥ ९ ॥

अशोकपल्लवैस्सख्यालंबिता इव कानने ।
बजीवप्रसूनेषु द्वैगुण्यमिव संश्रिताः ॥ १० ॥

उन्द्रावयंतः सांगत्या रक्ताख्यं नदीजले ।
तलमाणिक्यदीप्तीनामुत्क्षुपप्रक्रियामिव ॥ ११ ॥

शिबिरद्विरदांगेषु कुर्वाणाः पश्यतां नृणाम् ।
कुंभोत्तमितासिंदूरपरागप्रसरभ्रमम् ॥ १२ ॥

प्रवालपाटलाच्छायेष्वधरोष्ठेषु योषिताम् ।
चुंबनव्रणनिर्मुक्तरक्तधारोपमावहाः ॥ १३ ॥

गाढालिंगनभग्नस्य कश्मीरस्य नतभ्रुवाम् ।
स्तनेषु रागं तत्प्रीत्येवोत्कुर्वाणाः कृतस्थितिम् ॥ १४ ॥

श्च्योतल्लाक्षारसाद्धातुरुचिसर्वस्वतस्कराः ।
द्यावापृथिव्योर्भव्यास्ते प्रसस्रू रविरश्मयः ॥१५॥ कुलकम्

भास्वरोदयपीठस्थौ पृथवीपतयोपह्वौ ।
पादन्यासमकुर्वातामुच्चैर्मूर्सु भूभृताम् ॥ १६ ॥

तेजसानुक्रमोष्णेन रथस्थो रविचक्रिणौ ।
आयातां दिगभिव्याप्तौ राजश्रीहारिणावुभौ ॥ १७ ॥

---

* इतः पूर्वं सप्तश्लोका नोपलभ्यन्ते लिखितपुस्तके, न जाने किं कारणमत्र

चचाल चक्रिणश्चक्रं चकितास्य चमूर्द्विषाम् ।
शिविरान्निर्गमे तस्या· कायेभ्यो निर्ययाविव ॥ १८ ॥
तेजोभिर्ववृधे तस्य सर्वदिक्षु प्रतिक्षणम् ।
आलिंगनादिवारिस्त्रीनिश्वासप्रसरोष्मणाम् ॥ १९ ॥
अदृश्यो बलसंपाताज्ञयमाशंसतो भिया ।
पुष्करेष्वेवाभवत्तस्य नूनं सेनापरिच्छदः ॥ २० ॥
सेनयाऽनूनया तस्य निकृष्टोद्धतभंगया ।
सीतोदयेव सीतोदा प्रत्यासाद्यनुरक्तया ॥ २१ ॥
तीरद्रुमावलीछद्मात् श्यामवारिस्तरंगिणी ।
उत्पत्त्येव तमायातमद्राक्षीत्प्रसवेक्षणा ॥ २२ ॥
तत्सैन्यतूर्यसंघातघातोन्थतुमुलध्वनिम् ।
नादेयग्राहिनिर्घोषः स्वपोषमपुपत्पुन· ॥ २३ ॥
जलेभपुष्करोद्गीर्णस्वच्छातुच्छच्छटाजलै· ।
नद्योद्योत्तंभितास्तस्य ध्वजास्संनिधिहृष्टया ॥ २४ ॥
कूलवृक्षे निवसन्यं तत्र तत्र मनोहरे ।
तस्येत्यसूचयत् सिंधुर्भंगभ्रूक्षेपणाक्रमम् ॥ २५ ॥
तीरपर्यंतसंकीर्णपद्मरागमरीचिभिः ।
पुरस्कृतानुरागेव निम्नगा तस्य निर्यभौ ॥ २६ ॥
फेनलैरानर्नव्योम्नि भंगैरुत्प्लुत्य पातिभिः ।
मुखरैरत्वगात्तस्य हयसेना महानदी ॥ २७ ॥
तादृश्यगाधता तस्या महत्येव यदीच्छया ।
द्विस्तावा यदि निर्भक्ता वज्रनाभदयोप्यसौ ॥ २८ ॥
तत्पद्मनीपलाशानामवकाशः किमुच्यते ।
तद्घटे चक्रवर्तिस्त्रीस्तना यद्येमुरुद्घटाः ॥ २९ ॥

१ उपधाता ।

का तदाताम्रपद्मानां गुणेयत्ता यदूहिरे ।
एकैकेन सकृच्चक्रिपाणिपादमुखश्रियः ॥ ३० ॥

वेलावने समावास्य स सेनां मानवाधिपः ।
रत्नाद्वारेण सीतोदामुपतस्थौ रथास्थितः ॥ ३१ ॥

तत्राकृत्रिमसंतप्तचामीकरगृहोदरे ।
जिनदेवप्रतिच्छंदो भक्त्या तेनाभितुष्टुवे ॥ ३२ ॥

नमस्ते सार्वे ! सर्वज्ञ ! सर्वोत्तमगुणात्मने ।
सर्वद्वंद्वविनिर्मुक्त ! सर्वकैवल्यभूतये ॥ ३३ ॥

प्रकृतिस्थ ! नमस्तुभ्यं प्रकृतिप्रत्ययात्मने ।
प्रकृत्युपरमोद्दीर्णपरमानंदमूर्तये ॥ ३४ ॥

परमात्मानमानुत्य स इत्थं पार्थिवेश्वरः ।
रथेनाधिरथस्सिंधुमतिचक्राम विक्रमी ॥ ३५ ॥

शेषाक्षतैरिवोद्दामभृंगीमंगलगीतयः ।
अवाकिरन् पुरस्तस्य प्रसूनैस्तटवल्लयः ॥ ३६ ॥

मुदमातेनिरे तस्य स्यंदने बद्धदृष्टयः ।
हिमांबुजे कुटीरस्थाः सोद्ग्रीवा हंसयोषितः ॥ ३७ ॥

जलकुक्कुटसंशब्दं स निशम्य रतोत्सवे ।
कांताकंठध्वनेः स्मर्त्ता व्यधत्त स्मेरमाननम् ॥ ३८ ॥

तरुणारुणपद्मानि सरित्यच्छांभसि प्रभुः ।
स्वलोचनप्रतिच्छंदसदृशान्यन्वलोकत ॥ ३९ ॥

तटस्था रत्नभूलस्याः समुद्भ्राजिष्णुरश्मिभिः ।
भयेन जिष्णवे तस्मै करार्पणमिवादधे ॥ ४० ॥

प्रतिबिंबगतः प्रेंखदूर्मिभित्तिषु सर्वतः ।
समावृत इवाधावत्तद्रथो रथकट्यया ॥ ४१ ॥

---

१ सर्वस्मै हितकर । २ कर्मनाशोद्भवानंतानंदस्वरूपाय । ३ रथानां समूहेन

प्रत्यग्रवीचिविपर्यायप्रतिमातयिनो हयाः।
स्वतः स्वतो जवेनेव सरथा पुरतो ययुः ॥ ४२ ॥

गत्वा द्वादश वेगेन योजनानि नदीजले।
तस्थे रथेन केनापि स्तंभितेनेव भूपतेः ॥ ४३ ॥

स्यंदनस्य स्खलां वृत्तिमसहिष्णुं महीपतिम्।
भयगद्गदया वाचा जगाद रथचोदकः ॥ ४४ ॥

इतः परमियं भूमिर्न रथस्य नरेश्वर!।
अनादिवस्तुस्वाभाव्यमत्र विधिर्नियामकम् ॥ ४५ ॥

नह्यूर्जितप्रतापं त्वां प्रत्यवस्थातुमीश्वराः।
मनसापि कुतो नाम क्रियया देवमानवाः ॥ ४६ ॥

आयुष्मन्! प्रेष्यतां तस्माद्भवद्विजयिनामभूत्।
बाणस्तेनैव साध्योऽसौ मागधो व्यंतराधिपः ॥ ४७ ॥

आत्मभाषितमाकर्ण्य कृष्टमाकर्णगह्वरात्।
स शरं मोचयामास धनुषा मनुपार्थिवः ॥ ४८ ॥

तस्य निःपततां धाम्ना व्योम निःशेषगर्भितम्।
भयान्निमीलनं चक्रे शीतोदादेवतादृशाम् ॥ ४९ ॥

तत्तेजः प्रसरं द्रष्टुमक्षमाश्चक्षुषां पथि।
उत्पुच्छकं जले मग्ना बभूवुर्जलपक्षिणः ॥ ५० ॥

स बाणः समुपेत्याशु मागधस्य महौजसः।
मणिहर्म्यशिरस्तुंगं जघान घनघर्मणा ॥ ५१ ॥

अमरास्तन्निपातोत्थध्वानसंपादपीडितान्।
पिदधुः पाणिभिः कर्णान् भयाद्धाकारकारिणः ॥ ५२ ॥

भूपतीनं समादाय भूमिनाथस्य पत्रिणम्।
आस्थानस्थायिपार्श्वस्थो व्यंतरेशो व्यदर्शयत् ॥ ५३ ॥

१ उपस्थामिनम्। २ बाणम्।

तद्‌दृष्टसमयोदीर्णक्रोधघूर्णद्विलोचनः।
प्रोद्यत्कहकहाध्वानं प्रहस्येदमचीकथत्॥ ५४॥
ईदृशी तादृस्येव युज्यते साहसक्रिया।
यशसैवार्थिनो नित्यं न प्राणैः प्राणभृत्प्रियैः॥ ५५॥
विगाहमाना व्योमाग्रमद्य मत्कीर्तिवल्लरी।
अनेनास्त्रप्रकांडेन किं न चंडेन खण्ड्यतेमम्॥ ५६॥
तोमरप्रणिधेस्तस्य जलातिक्रमकारिणः।
अमी रत्नविशेषाः किं नोपस्थानं प्रकुर्वते॥ ५७॥
इति क्रोधोपहासाभ्यां यथार्थमेव भारतीम्।
अभिजल्पंतमाचख्युस्तमन्ये ख्यातपौरुषाः॥ ५८॥
इयमत्युज्वला लक्ष्मीर्यद्वत् प्रथितोन्नतेः।
सौदामनीव जीमूतात् कस्य शक्या पृथक्क्रिया॥ ५९॥
व्योमेवाक्रांतविश्वाते बलाद् दुर्लंघ्यपौरुषाम्।
हठादाक्रष्टुमीष्टे कः श्रियं चंद्रकलामिव॥ ६०॥
तस्य का वा भवेन्न श्रीर्यस्तु ते संगरोत्सवे।
चंडदोर्दंडकंडूतिकंडूयनभरक्षम॥ ६१॥
अमर्त्यनिवहावार्यवीर्यख्यातेस्तवेदृशी।
मानवानुत्तमे तस्मिन्नाक्षेपोक्तिरयुक्तिका॥ ६२॥
अतस्सुभटसंमर्दलब्धविक्रमसिद्धयः।
ईप्सितार्थक्रियासिद्धौ देव! प्रेष्यामहे वयम्॥ ६३॥
बहलप्रस्तृतोद्दामधूमप्रत्यूहलोचनः।
दूरादभ्येत्य दावाग्निं कोतिक्रमितुमीश्वरः॥ ६४॥
शुष्कांबुतलमात्रस्थभ्राम्यत्तिमितिमिंगिलम्[1]।
करवाम यदीच्छा ते शीतोदाकुहरोदरम्॥ ६५॥

---

[1] मीनमकरनक्रचक्रादि।

निरस्य नीरसं वारिक्षारमर्णवगह्वरम् ।
संपादयेम संपूर्ण तव देव यशोऽमृतैः ॥ ६६ ॥
मेरुमुन्मील्य भूगर्भात् प्रभावं तत्र शाश्वतम् ।
कीर्तिकल्पलतालंबस्तवभुत्तंभयेम ते ॥ ६७ ॥
अपारभान्मतः शुभ्राः चलादाहृत्य भावलीः ।
हारीकृताभिस्ताभिस्ते भूपयेम भुजांतरम् ॥ ६८ ॥
धीरमित्यभिधायोच्चैराकाराविष्कृतोद्यमाः ।
अभूवन्युद्धसंनद्धा मागधानीकनायकाः ॥ ६९ ॥
प्रकोपताम्रया दृष्ट्या खड्गकस्यामिपश्यतः ।
प्रागेवाजनि संग्रामात् स ध्रुवं लिप्तलोहितः ॥ ७० ॥
कैश्चिद्वज्रमया दंडा दृढमुष्टिनिपीडिताः ।
स्वीचक्रुर्विक्रमोदारैर्व्यथयेव परिभ्रमम् ॥ ७१ ॥
दृढज्याकृष्टिकर्मण्याः कोदंडं मंडलीकृतम् ।
जयश्रीसंप्रवेशाय दधुर्दूरमिवापरे ॥ ७२ ॥
रत्नसंवाहिनश्चान्ये तत्प्रभामध्यवर्तिनः ।
चकाशिरे भृशं दृश्यतेजः पल्लविता इव ॥ ७३ ॥
केचिन्निसर्गनिस्त्रिंशा निस्त्रिंशान् दधतः करैः ।
प्रत्यासन्नरणप्रीत्या बभूवुर्द्विगुणा इव ॥ ७४ ॥
भास्वतः स्वप्रतापस्य परिवेषमिवोचितं ।
गदावर्तनवैदग्ध्याद्धीराः केचिद्वितस्तरुः ॥ ७५ ॥
क्रोधहासोल्लसद्दंतदीप्तिभिस्तत्क्षणान्मुखमम् ।
अभिषिक्तमिवोदस्यैर्विवर्विक्रमं भटाः ॥ ७६ ॥
आपतन्मधुपालापैरालिप्तहरिचंदनाः ।
केचिद्वाचालयामासुरिव स्वं प्रथमोद्यमम् ॥ ७७ ॥

१ मागधसेनापतय । २ स्वभावक्रूर ।

परे तु स्फुरितोद्दामकुंतदंतुरपाणयः ।
विरेजिरे नतिक्रम्य विक्रमांकुरिता इव ॥ ७८ ॥

सिंहनादकृतः केचिदुद्वेलरणरंहसः ।
प्रायः पिशुनयामासुः गांभीर्यं शौर्यवारिधेः ॥ ७९ ॥

स्फारमास्फालयंति स्म स्वर्ग्याः केचिद्भुजेर्भुजान् ।
अमांतमंतः संग्रामरागं रोद्धुमिवोद्धताः ॥ ८० ॥

रणरागोदयस्फीतगात्रस्फुटितभूषणाः ।
केचित्सत्यापयंते स्म नैर्ग्रंथ्यं युद्धदीक्षिताः ॥ ८१ ॥

इत्थं परिषदा सार्द्धमुद्युक्तं परिषद्बलम् ।
निषिध्य कुलवृद्धास्तमवोचन्न विचारिणम् ॥ ८२ ॥

प्रभो तव किमुक्राहं पुरः कर्तव्यवेदिनः ।
तथाप्यवसरोऽयं नः स्वाधिकारप्रवर्तने ॥ ८३ ॥

अविविच्य क्रिया नैव श्रेयसे बलिनामपि ।
गजोऽपि निपतेत् गर्ते वृत्तस्तमसि चर्यया ॥ ८४ ॥

अशक्यवस्तुविषयः प्रत्यवायकृदुद्यमः ।
अंघ्रिणा क्रमतोऽप्यद्रिमंघ्रिस्फोटः स्फुटायते ॥ ८५ ॥

स्वैरमन्यदतिक्रम्य प्रवर्ततामिलं बली ।
कालक्रमोपपन्ना तु नियतिः केन लंघ्यते ॥ ८६ ॥

प्रवृत्तो व्यवहारोऽयं दैवनिश्चायमन्यथा ।
यदभूवन्भवद्वंश्याश्चक्रभृद्रथः करप्रदाः ॥ ८७ ॥

इत्याप्तवाचां प्रामाण्यात् प्रसन्नो मुक्तमत्सरः ।
रथस्थमुपलभ्ये स भूपभुं व्यतरत्प्रभुः ॥ ८८ ॥

व्यनमद्भिनयोदारजयकारकृतांजलि । म्
सबंधुपरिवारस्स क्रमयोश्चक्रवर्तिनः म् ॥ ८९ ॥

---

१ रात्रमा ‌अते स्म । २ पादयो ।

द्यौर्विवर्ष तदा पौष्पीं वृष्टिमाकृष्टषट्पदाम् ।
अधिचक्राम दिक्चक्रममंदो दुंदुभिध्वनिः ॥ ९० ॥

अनेकरागसुव्यक्तिश्रव्याभोगमनोहरम् ।
रथांगपणिना साकं मधुरं किन्नरा जगुः ॥ ९१ ॥

अनेन विकचाताम्रकुशेशयदृशा तदा !
आलुलोके तदाश्चर्यं नूनं निमग्नया तया ॥ ९२ ॥

आनीय सारवस्तूनि साकं तत्सायकेन सः ।
इदं प्रश्रयिता वाचा बभाषे पृथिवीश्वरम् ॥ ९३ ॥

कुण्डलद्वयमेतत्ते मंडनं देव ! गंडयोः ।
भास्वतोर्मध्यगस्येंदोर्लीलामातनुतां मुखे ॥ ९४ ॥

स्वतः स्वभावयभूभारं बिभ्रतस्तव कंधरम् ।
अयमालिंगतु स्फारो हारश्शेष इव प्रिय ॥ ९५ ॥

देव ! किं बहुना यत्र कुलक्रमसमागतम् ।
तदैव वस्तु सर्वं तदन्यत्र शुभकर्मणि ॥ ९६ ॥

इति ब्रुवंतं संतोष्य प्रस्थाप्य च तमीश्वरः ।
प्रत्याजगाम शिबिरं कुबेरोपमविक्रमः ॥ ९७ ॥

वैजयंत्या पुनः सिंधुं प्रविश्य वसुधेश्वरः ।
देवं वरतनुं चक्रे विक्रमी स्वक्रमानतम् ॥ ९८ ॥

अलार्घ्यं कवचं नव्यं चूडारत्नमयत्नजम् ।
ददौ वरतनुस्तस्मै सुस्मेर मणिकंकणम् ॥ ९९ ॥

रक्तोदयाप्रविष्टस्य सीतोदां तस्य संभ्रमात् ।
सर्ववस्तुप्रदानेन प्रभासः प्रणतोऽभवत् ॥ १०० ॥

करदीकृतसीतोदावास्तव्यामरनायकः ।
प्रतस्थे विजयार्द्धाय विजयी विजयात्मजः ॥ १०१ ॥

---

१ स्वपादयोर्निम्नम् ।

वहंत्या तस्य वाहन्या तटे स प्रतिवाहया।
प्रव्यधत्त च रक्तोदा गतप्रत्यागतक्रियाम्॥ १०२॥

क्रमेणापश्यदासाद्य स राजा रजताचलम्।
यशः स्वमिव संभूय पुरस्तात्समवस्थितम्॥ १०३॥

सतः प्रसृत्य प्रथिम्ना चुंबता ककुभां मुखम्।
कुर्वाणं द्रव्यसंबंधगुणाख्यातिमिवान्यथा॥ १०४॥

शिखरैर्लिखिताशेषदिग्मुखैर्दृढपीवरैः।
अनालंबमिवोत्तंभं बिभ्रतं व्योममंडलम्॥ १०५॥

प्रस्थभूम्यः समुद्भ्रांतैरभ्रकूटैश्च पांडुरैः।
विहरंतमिव व्योम्नि गात्रैर्विद्याबलाश्रयम्॥ १०६॥

भूभृत्सानुषु संभूतस्वच्छपानीयनिर्झरैः।
जिगीषोस्तस्य दृष्ट्वेव भूयः प्रस्वेदकारिणम्॥ १०७॥

दधतं खेचरक्रीडाकुरंगाध्यासितोदरम्।
पर्वेणंदुमिव क्वापि स्फाटिकोपलमंडलम्॥ १०८॥

दूरप्रसृतया स्वस्य प्रभया वर्त्मगामिनाम्[1]
प्रवाहयंतं संतृप्त्यै व्योमगंगामिवाग्रतः॥ १०९॥

स्फीतपार्श्वतया व्योम्नि विकाशस्थितिलब्धये।
प्रोत्सारयंतमाशाः ककुद्भित्तारिवानिशम्॥ ११०॥

शुभ्रदीप्तितिरोभाव्यपरभागतयान्वितम्।
असमानमिवाजस्रमापातुकपतत्रिणः॥ १११॥

विशदभित्तितटिप्रतिबिंबप्रयोजनम्।
दर्पणग्रहणे यत्नं श्लथयंतं नतभ्रुवाम्॥ ११२॥

स्फुरदातपसंपृक्तसूर्यकांतोद्गतानलम्।
दर्शयंतं स्वगात्रेषु तत्प्रतापमिवाश्रितम्॥ ११३॥

---

१ विजयार्द्धम्।

एकशो निर्मलानेकसानुभित्तिगताकृतीन् ।
बहुरूपभृतो विद्यावार्यंतमिव द्रुमान् ॥ ११४॥ आदिकुलकम् ।

तत्पर्वतवनोपांते विशश्राम नरेश्वरः ।
आर्यखंडगतास्तत्र भूभृतस्तु निषेविरे ॥ ११५ ॥

विजयार्धकुमारोऽपि तत्प्रभावेन चोदित· ।
आनर्च तं भयानम्रस्तेन भद्रासनार्चितम् ॥ ११६ ॥

श्वेतातपत्रभृंगारहरिविष्टरचामरैः ।
करप्रदानं निर्वृत्य निजधाम जगाम स ॥ ११७ ॥

भूषणानि भुवां पत्ये चतुर्दश महोजसे ।
अदापियत भीतेन कृतमालदिवौकसः ॥ ११८ ॥

विना येन नयेनाविर्भाव्यते न गुहामुखं ।
तस्मै स च नमाचख्यौ तेनधीरुन्धीमते ॥ ११९ ॥

आद्यंतपादगतप्रत्यागतम् ।

सेनानीश्चक्रिसंदेशादारूढे हयमुत्तमम् ।
दंडरत्नधरस्तूर्णमजिहीत गुहांतिकं ॥ १२० ॥

स्वामिनाम त्रिरुच्चार्य दृढबंधनबंधुरं ।
कपाटपुटसंधानं दंडाग्रेण जघान स· ॥ १२१ ॥

ईहावहमुखत्वेन गदया निदितालयं ।
गुहागृहमुखं तेन विदधे विवृताश्रयं ॥ १२२ ॥ गोमूत्रिका ।

यावदन्यागतस्तीव्रो न गुहोष्मा स वेगिना ।
अश्वेनालंघयद्दूरमन्यालंघ्यपराक्रमः ॥ १२३ ॥

तुरंगी चतुरंगी च म्लेच्छनिर्जयनोद्यमी ।
स्वभावेन स्वभावेन प्रतस्थे पृतनापतिः ॥ १२४ ॥

---

१ अभिषेकपात्रम् । २ आर्द्रीभूता बुद्धिर्यस्य सः ।

तं म्लेच्छाः सर्वभावेन समरेऽसमरे चिते ।
भग्नाः शरण्यमाजग्मुः पीडने पीडनेरिनाः ॥ १२५ ॥

समदर्शीप्रदानेन समदर्शी स संयुगे ।
मनुजः स्वामिनः स्वैरमनुजग्राह तानयं ॥ १२६ ॥

तेभ्यो द्रविणमादाय मनोमदनवाहितं ।
आययौ स नृपोपांतमनोमदनवाहितम् ॥ १२७ ॥

शांतोष्मणि गुहागर्भे स सम्राट् तत्र सेनया ।
अगादशनयसंख्यानां सुधियां स्वरसेनया ॥ १२८ ॥

भित्तिलेख्यौ थिरे जाते काकणीमणिनिर्मितौ ।
तत्र रुक्प्रसरे जाते पुष्पदंतौ तमोपहौ ॥ १२९ ॥

सा सेना समयामास गुहासिंधोरुभो तटौ ।
सा सेना समयामास सन्नाहे चक्रवर्तिनः ॥ १३० ॥

विहितारिविंदानेन विंदाऽनेनै ततो जगत् ।
यशसा वेष्टितो मानवेष्टितोऽर्मो नवेर्ष्यया ॥ १३१ ॥

तस्याजनत एवोग्रा हेमकारस्य सैनिका ।
यशोहिमकरस्यासन् सग्रामाय समुद्यताः ॥ १३२ ॥ मात्राच्युतक॰

व्यूहं विरचयामास सर्वतो भद्रमात्मन॰ ।
येन सेनापतिः कामं सर्वतो भद्रमाद्युतिः ॥ १३३ ॥

रथेन पृथुलाताम्रपताकाभिर्द्विषां वले ।
कृतांतस्येव जिह्वाभि॰ सभियः प्रविभेजिरे ॥ १३४ ॥

बभूव युद्धमुद्धाम्यदस्त्रतद्वलयोर्द्वयोः ।
मंदस्यंदविनिर्मुक्तमदस्यंदवहद्द्वजं ॥ १३५ ॥ विंदुच्युतकं ।

हेमयोगभृतो व्यूह्यवाजिनो भीमहेषिताः ।
प्रसस्रू रणभूपृष्ठे मध्यभूयोगमागताः ॥ १३६ ॥ गूढचतुर्थव

---

१ कृमराशुल्कडभेन । २ विदुषा । ३ चार्मिणा । ४ बह ।

कृततूर्यरवाक्रोशा पृतनाक्षोदपीडिता ।
पांशुच्छद्मोत्पपातेव स्वस्थानाद्वियदुर्वरा ॥ १३७ ॥

सद्यो वाद्यरवो व्योम्नि जजृंमे धीरसुबरन् ।
सद्योवाद इवास्यास्तु संगरोद्वेगकारणम् ॥१३८॥ अक्षरच्युतकम् ।

अरीणामुत्तमांगानि निशितानततोमरैः ।
चिच्छेद निश्चयात्कश्चित् व्योमस्थैर्विनतोमरैः ॥ १३९ ॥

तरवारिभृतः सद्यो वीराः कातरवारिणः ।
का निःकंपेति रे वाचो भटैस्संपेतिरे परैः ॥ १४० ॥

अंतःशून्या वहन्नागपाशासंनहनाह्वाः ।
अनवद्या घनध्वानैर्वाणै केचित् प्रजह्निरे ॥ १४१ ॥

अंतःशून्या वृहन्नागपाशासंनहनाह्वाः ।
अनवद्या घनध्वानैः कोणैः केचित्प्रजह्निरे ॥१४२॥ अक्षरव्यत्ययः ।

अश्वैरिपुधियो गाढाकृष्टैरप्यन्यकैर्हता ।
स वैरिपु वियोगादक्रुष्टो दत्वाऽभ्यगुर्भृते ॥ १४३ ॥

वितेनुर्वसुधाचक्रं वरवारणवाजिनः ।
आहवे निहतास्नाकं वृत्तया रथकद्यया ॥ १४४ ॥ अपवर्गः ।

निस्त्रिंशच्छिन्नभूलग्नशिरसो विषयं दृशोः ।
अरिमभ्यगुरुच्छत्राः कबंधाः शौर्यशालिनाम् ॥ १४५ ॥

असहिष्णुतया युद्धे चिलातावर्त्तभूभृत ।
पूर्वमाराद्वयस्यानामहींद्रानुसस्मरुः ॥१४६॥ अकचवर्गः ।

अमी मेघमुखा व्योमव्याप्तवारिमहारवम् ।
ववर्षुर्विपुलोच्छाया गिरिर्ङवग्गोपकम् ॥ १४७ ॥

विकीर्णध्वमेरत्नस्थं कटकं चक्रवर्तिन ।
छत्रं जुगोप नष्टेः प्लवमानं महाजले ॥ १४८ ॥

वज्रसूचीमुखोद्भिन्नं छत्रधारगतांबुना ।
तत्सर्वं नृपतेर्वेद्यमकुर्वन् तत्समीपगाः ॥ १४९ ॥
किं केनेत्यसहे तीक्ष्णं कथयत्यथ राजनि ।
क्षितिग्रस्तं जलं यत्र नतास्ते तदरातयः ॥ १५०
सारवस्तुप्रदानेन म्लेच्छैर्विनतमौलिभि ।
सारवस्तुप्रभात्पूर्वं रक्तोदा देवता ययौ ॥ १५१ ॥
साभिषिच्य तमुर्वीशं रिपुसंभद्रमासनम् ।
दीप्तरत्नमयं तस्मै प्रददौ भद्रमासनम् ॥ १५२ ॥
निषधं प्राप्य गोशीर्षचंदनाद्यैस्तदीशिना ।
अनुजग्राह स पश्चात्पूजितो दिव्यभेषजैः ॥ १५३
रक्ता देवी नृसिंहाय तस्मै सिंहांकमासनम् ।
भयाददायि याताय कृत्वा प्रागभिषेचनम् ॥ १५४ ॥
सदेवमानवानीकैराययो वृषभाऽचलम् ।
सदेवमानवानीयोऽनुतस्थावन्यजन्मनि ॥ १५५ ॥
तत्रालिख्य समुद्रामशवर्वीर्यश्रुतादिकम् ।
सकांडकप्रपातारूयगुहापार्श्वमुपाययौ ॥ १५६ ॥
अदायि तस्मै स्त्रीरत्नं नयते गगनेचरैः ।
अतोऽदायि नतोदारैरयत्नं दायिने नरैः ॥ १५७ ॥
पृतनापतिना पार्श्वे मंडलाधिपमंडलीम् ।
निर्जित्योद्घाटितद्वारां स गुहामत्यगात्प्रभुः ॥ १५८ ॥
ताम्रमालस्तमासाद्य भृंगारच्छत्रचामरैः ।
अपूजयत्समेतोऽन्यैरादरात्तत्र चामरैः ॥ १५९ ॥

ऊर्जस्वलां म्लेच्छकुलस्य लक्ष्मीं
निर्जित्य विश्वां पृतनेश्वरेण ।
पतिर्भुवामश्वपुरं प्रतस्थे
समुन्नतः किंनरगीतकीर्तिः ॥ १६० ॥

वियदविरलयानव्यंतरैर्व्योमगाहे—
श्चलति सकललक्ष्मीधाम्नि निर्भत्किसीम्नि ।
नरतुरगरथैर्भैरुच्चलत्सूर्यघोषै—
रखिलमवनिचक्रं व्यानशे मानवेशे ॥ १६१॥

तेजस्वानुदर्या दयार्णवनिधिर्गीर्वाणसेव्यक्रमः
क्रीडानिर्जितषड्विभागवसुधाचक्रस्स चक्रेश्वरः ।
प्राप्य' प्रौढमहोत्सवं हयपुरं पौरैः समभ्यर्चितो।
दीर्घं बंधुसुहृत्समूहसदर्शी पुण्यादभुंक्त श्रियम् ॥ १६२ ॥

इति श्रीवादिराजसूरिविरचिते श्रीपार्श्वजिनेश्वरचरिते
महाकाव्ये वज्रनाभचक्रवर्तिदिग्विजयव्यावर्णनंनाम

सप्तम. सर्गः ।

---

# अष्टमः सर्गः ।



विकस्वरांभोरुहसन्निभाननं
घनस्तनोत्तंभितहेमयष्टिकम् ।
मनो मुदं तस्य ततान संततं
नतभ्रुवां पण्णवतेः सहस्रकम् ॥ १ ॥

चतुः पराशीतिकलक्षसंख्यया
महागजेंद्राश्वमिता मदोद्धताः ।
व्यभासयंस्तद्भवनांगणक्षितिं
समुद्गमद्भृगमदांवुपिंछलाम् ॥ २ ॥

जात्यश्वकोट्यश्वसरेलयाना
दशाष्ट चोत्कृष्टजवाः प्रतीताः ।
अशेषदीक्षारगताः प्रतेनुः
प्रसह्य तद्वैरिमनः प्रकंपम् ॥ ३ ॥

भयानमन्मौलिभरेण नित्यं
निष्पीडितावुद्धिकचान्जलीलो ।
बभूवतुस्तच्चरणो प्रणांकौ
द्वात्रिंशता राजसहस्रकेण ॥ ४ ॥

प्रभाविरत्नस्थितिरत्नसंचयं
सुवर्णधान्यादि च तस्य धीमतः ।
विभज्य पूज्यस्य मतं महीभृतां
नवापि नित्यं निधयो वितेनिरे ॥ ५ ॥

चतुर्दशानुत्तमरत्नराजितां,
स बिभ्रदुद्दामगुणश्रयां श्रियम् ।

---

१ अतिभ्रमन्बाणाम् । २ दीक्षारा – अश्वबारा ।

वसंतलक्ष्मीगुणसंदिदृक्षया
जगाम पौरैर्वनपालचोदितः ॥ ६ ॥

वनप्रवेशे मधुसंभृतश्री—
र्महीभुजो दृष्टिपथाग्रवर्ती ।
चूतोऽहरच्चित्तमुदात्तगीत—
भृंगावलीमंजुलमंजरीकः ॥ ७ ॥

प्रवालभारोद्वहनादिखिन्न—
मुद्भिद्यमानांकुरचारुशाखम् ।
अवाप्य विश्वं सहकारिणं त्वां
जयेत्सहेलं सहकार मारः ॥ ८ ॥

विकासलीलासुरभं मनोभवो
भवंतमभ्यस्यति संश्रितो धनुः ।
वसंतमाकंदकथं तदन्यथा
शिलीमुखोत्पादनिपात्यनिस्यता ॥ ९ ॥

तदस्त्रसूचीसदृशैर्दिशां मुखे
समन्मुखेराम्रमुकर्मपत्रकेः ।
भवानतस्थानपि कान्न लंघये-
न्नवांकुरैः किंकरकां मनोभव. ॥ १० ॥

भवानपि त्वं सहकारजातिः
सयौवनानामसि कल्पवृक्ष ।
तनोषि तेषां यददाक्यलोभ्यं
तनूदरीणामभिमानभंगम् ॥ ११ ॥

ध्रुवं त्वमुद्दीपयसि स्मराग्नि—
मालोलशाखां मलयानिलेन ।

१ हे आम्र ।

प्रवासिनां चेतसि चूत ! सत्यं
    व्रजंति मूर्च्छामतियौवनस्थाः ॥ १२ ॥
अयं मनोभूः सहकारमंजरी—
    रुदस्त्रयत्येव लघु प्रवासिनः ।
प्रियाः प्रियेतेति समादिशन्निव
    तदाश्रयी कूजति मत्तकोकिलः ॥ १३ ॥
रजःक्षरन्तीः सहकार सांप्रतं
    समुद्वहेः पल्लवरक्तमंजरीः ।
मुखासवामोदलसन्मधुव्रता
    विचेतसे तुभ्यमपि प्रभुः स्मरः ॥ १४ ॥
इति स चूतं मनसेव जल्प-
    न्ननल्पसौभाग्यगुणं गुणज्ञः ।
प्रियासहायः सहितो वयस्यै-
    र्वनेऽवनीशो विजहार हृद्ये ॥ १५ ॥
नतभ्रुवामाननगंधगृध्या
    मधुव्रतैस्तत्क्षणमुक्तपुष्पाः ।
अवाप्य लज्जामिव कंपमाना
    नता बभुवुर्वनभूमिवल्यः ॥ १६ ॥
कृतानुयोगा व्रततीषु योषितः
    प्रियैः स्वसंवीक्षणलोलुपेक्षणाः ।
स्वभावमुग्धाः स्मितमेदुराननै-
    रमूरदर्शयंत मुहुर्द्रुमांतरैः ॥ १७ ॥
व्यधत्त काचित् नवपल्लवानां
    न संग्रहं नापि नतो व्यरंसीत् ।

---

१ अस्त्रं करोति । २ पूर्व व्दाचामे दलस्य रूपम् । ३ अग्रस्थपुष्पसुगंधेन विलसन्तो भ्रमरा यासु । ४ लालसया ।

प्रसारिता ताम्रकरैव तस्थौ
तद्वेदमद्धानवबुध्य मुग्धा ॥ १८ ॥

कुचौ कयाचिद्विनिवेशयंत्या
तदग्रयोश्चूतनवप्रवालात् ।
न्यधायिपातामिव मन्मथस्य
सचित्तधामाभिमहेमकुंभौ ॥ १९ ॥

तनूकृतै केसरिदीर्घपल्लवैः
भुजौ निजौ कश्चन योजयन्युवा ।
प्रियां सपत्नीनखवर्त्मशंकया
समत्सरां स्मेरमुखो निरैक्षत ॥ २० ॥

जगाल कस्याश्चन हस्तसंग्रहा—
दशोकजन्मा नवपाटलच्छदः ।
नतभ्रुवस्तत्करपाटलद्युते—
रिवातिरेकं बहलं पदे पदे ॥ २१ ॥

अप्राप्नुवन्कोपकृतः प्रियायाः
दंतच्छदं कश्चन चाटुशौंडः ।
तवाधरोऽयं न किमित्यभीक्ष्णया
च्याम्रच्छदं ताम्ररुचि ददंश ॥ २२ ॥

कश्चित्पलाशैः सहकारयष्टे—
रुवाच मुग्धां स्त्रियमंगलग्नैः ।
गात्रं दलंती सत्वाणमेयाद्.
दीक्षस्व मे मांसलमांसपेशिम् ॥ २३ ॥

प्रियामवस्थाप्य पुरः पराङ्मुखी
तदंगकामांग्रिनिवेशलीलया ।

अधस्तरोस्तत्कुसुमैः सुगंधिभिः
ववंध तस्याः कवरीं युवापरः ॥ २४ ॥

निगृह्य केशेऽथ चापपाणिना
सखीं प्रियस्कंधगतांघ्रिपल्लवा ।
स्वयं सपत्नीजनसंनिधौ वधू
र्लुलाव शाखाग्रिमभूतमंजरी[1] ॥ २५ ॥

मनोज्ञताऽस्मादपि तस्य तस्मात्
तस्येति प्रादिश्य विकाशिवृक्षान् ।
स्वेच्छारतो कश्चन निश्चितात्मा
निनाय जायां विजनप्रदेशं ॥ २६ ॥

बहुप्रसूनाभरणाभिरामा
तरुप्रवालस्तरणे निषण्णा ।
उपांत्यवर्तिन्यचकाच्च काचित्
प्रिये वसंते वनदेवतेव ॥ २७ ॥

विसृष्टवन्यप्रसवोदरस्थिते—
र्मधुव्रतानां निवहादभिद्रुतात् ।
मनोरमामोदमुखारविंदया
कयाचिद्भ्राम्यत सत्वरं भिया ॥ २८ ॥

मनोज्ञमाल्यं दयितेन यच्छत्
प्रिया सपत्नी गुणनामचोदिता ।
ह्रिया कृताऽसूयमभूदवाङ्मुखी
तमुद्वहंतीव हृदि व्यवस्थितम् ॥ २९ ॥

प्रसूनवल्लीमवलूय कश्चित्
कांतासखीनां निकटं जगाम ।

---

१ केशवेश ।

उद्धृत्य शाखामभिधातुकाम—
श्चित्तस्थतास्कार्यमिव प्रियायाः ॥ ३० ॥

लतालतांतादवचीयमाना—
दास्यांबुजं स्मेरमितान् द्विरेफान् ।
निरास नारी स्वरमात्रबुद्धा
दंतप्रभापांडिमगर्भगूढान् ॥ ३१ ॥

नितंबदेशश्लथसूक्ष्मवाससं
भुजाउदंस्योद्गमसारहारिणीम् ।
आलोकयन् कश्चन कामिनीं युवा
रसान्निवृत्तप्रसवग्रहोद्यमः ॥ ३२ ॥

प्रधावयंतं अवतस्तदासनं
भयेन हिंदोलगता नितंबिनी ।
रतिक्रियाधिक्यफणप्रतिश्रया
निवारयामास कृतांजलिः प्रियम् ॥ ३३ ॥

पुष्पल्लतागर्भगृहप्रविष्टाः
स्त्रीषु सरत्युत्सवकंठशब्दाः ।
अवापुरुच्चैर्न बहिः प्रचारं
परिभ्रमद्भृंगरवाभिरुद्धाः ॥३४॥

वधूरधासीन्मधु कौसुमं तां
त्रपा जहौ तत्क्षणमेव दक्षः ।
चुचुंब तस्याः परितोष्टबिंबं
सख्यः परावृत्तमुखीवभूवुः ॥ ३५ ॥

अगायि चक्रेश्वरकीर्तिरुत्तमा
वधूवरैश्चंदनवीथिषु स्थितैः ।

---

१ इतान् प्राप्तान् । २ पुष्पसारग्राहिणीं ।

निरीक्ष्य नागैर्द्रुमकोटरोन्मुखैः
प्रदित्सयेवोन्मणिभिश्च शुश्रुवे ॥ ३६ ॥

क यासि मत्प्राणसमा विलोचन—
श्रियं त्वदुन्मुष्यमृगीति कश्चन ।
प्रयुज्य पाणिं हरिणीमनुव्रजन्
मनं दरुद्ध प्रियया विकोपया ॥ ३७ ॥

तलं मदंघ्रेः कठिनाश्मधृष्टया
प्रतुद्यते तत्प्रविलोकयेति ।
निनाय काचिन्नयनोपकंठं
पत्युस्सपत्नीजनसंनिधाने ॥ ३८ ॥

मितप्रहारेण नवप्रसूनैः
केलीविलासप्रविवर्धितेन ।
भंजन्मनः किंचन दंपतीनां
यथार्थनामाऽजनि पुष्पबाणः[1] ॥ ३९ ॥

रहः परामृष्टतदंघ्रिपल्लवं
प्रमोदयंतं कुपितामिव प्रियाम् ।
लता जहासेव नवप्रसूनकै—
र्युवानमंतर्गतभृंगनिश्वनैः ॥ ४० ॥

ध्रुवं तदा चक्रधरस्य तद्वने
विनोदलीलाप्रविलोकनेच्छया ।
अनीरदस्यामनुचेर्विविश्वता
नभस्तमालस्य शिरोऽचरुद्यतः ॥ ४१ ॥

वहिर्गताः प्रागवनीरुहाणां
छायास्वेस्तापमिवाम्महन्त्यः ।

---

१ पंचशरः ।

प्रविश्य शाखामयमंडपानां
तलेष्वदोपेतरशीतलेषु ॥ ४२ ॥

कुचेषु कांतारविहारखिन्ना
नतभ्रुवामाननचंद्रबिंबात्।
लावण्यसिंधोरिव पूर्तिशेषै—
र्घर्मोदबिंदुप्रसरैर्निपेते ॥ ४३ ॥

नखंपचे पांशुलवर्त्मनि स्त्रियो
नितंबभारादिव मंथरैर्गतेः।
प्रियोपसंव्यानतिरोहितातपाः
शनैर्बभूवुस्तरुमूलसंश्रयाः ॥ ४४ ॥

उदारतोयेरुहगंधबंधुर—
स्तरंगसंगेन शनैश्चरन्मरुत्।
कृतश्रमं वन्यविमोदलीलया
जराशयाय प्रजिघाय भूभुजम् ॥ ४५ ॥

म्लायत्प्रवालच्छविरूढतापा
प्रसक्ति तन्याप्रसवेक्षणेषु।
अभिव्यनक्तिस्म वियोगदुःखं
ध्रुवं तदा चक्रभृतो वनश्रीः ॥ ४६ ॥

स्वच्छांबुसच्चारुसरोवरस्य
रोधोगताश्चक्रधरस्य कांताः।
उत्फुल्लपद्मेषु बबंधुरात्म—
मुखप्रतिच्छंदमनांसि मुग्धाः ॥ ४७ ॥

निरूप्य राजार्पितनित्यहृद्यतां
महासरःश्रीर्वनितामुखश्रियाम्।

---

–१ नखतापदायिनि। अतितापयुक्त इत्यर्थं। २ तटप्राप्ता।

अतद्गुणाः कैश्चन चारुवारिजै-
रधोमुखत्वं त्रपयेव संदधे ॥ ४८ ॥

विकस्वरांभोरुहगर्भनिस्सरन्
मधुव्रतश्रीमधुरस्वरोद्गमैः ।
उपेयुपस्त्वामुपभोक्तुमिच्छया
प्रियं जगादेव नृपस्य सद्मनि ॥ ४९ ॥

कस्याश्चिदंभः प्रथमं प्रविश्य
प्रियेण वक्त्राभिमुखं प्रयुक्तम् ।
स्वजात्ययोग्यं वत मत्सराग्ने-
रन्याशये त्विंधनतामियाय ॥ ५० ॥

पद्मे किमत्रापि सुगंधतेति
मुग्धांगनां कश्चन वंचयित्वा ।
तद्गंधयत्नेन चुचुंब वक्त्रं
निगूढकायं पयसा परस्याः ॥ ५१ ॥

आदिस्तनोत्संगमनंगमुग्धया
न्यधायिपातां पृथुपद्मकुड्मले ।
अबुध्यतैनां सुरभिं रतोत्सवे
चतुःस्तनीकामदुघामिव प्रियः ॥ ५२ ॥

गृहीतमंभः प्रसरं पदे पदे
निरूप्य तस्मिन् दशनच्छदच्छविम् ।
करेण काचिद् मणुनोदजालिका
प्रकीर्णशोणांबुजपत्रशंकया ॥ ५३ ॥

आः किं न सूक्ष्मं वरदर्शनीयं
प्रियस्य दृष्टिर्जघनं निषेद्धुम् ।
आगच्छदच्छं कुचदघ्नमंभः ।
काचिन्नवाहंकृतजातकामा ॥ ५४ ॥

करांबुजे रागवती दधाना
वपुश्च पुंसां नयनाभिरामम् ।
लक्ष्मीरिवावर्त्तत लीलयैका
ततस्ततः पद्मवने मृगाक्षीः ॥ ५५ ॥

अवस्त्रमूर्वोः स्थितमंभसा द्वयं
द्विदक्षसि प्रेयसि तत्करेण ।
विदग्धया मंडुकपाददक्षया
बभूव तावत्कलुषीकृतं पयः ॥ ५६ ॥

अनुव्रजद्वारि तनूलघुक्रिया
ततार काचिद्विकचांबुजानना ।
जनाः पुनस्तामनुलोक्य मेनिरे
विनोदयंतीं जलदेवतामिव ॥ ५७ ॥

करेण दीर्घेण मृणालयष्टि—
माकृष्य यंशोन्नतमूर्तिरेका ।
करीव पर्यायवशादयच्छत्
कामी गजस्त्रिभ्य इव प्रियाभ्यः ॥ ५८ ॥

नीलाश्मरश्मिप्रसरांधकारे
नीरे पराहृदयमनंगवश्यैः ।
वधूषु तत्कर्मवरविंबवने
निशीव योग्यं यदपोढशंकैः ॥ ५९ ॥

अनेकराजन्यकयंत्रपीडित—
प्रकामदीर्घामलवारियष्टिभिः ।
निगदभूद्रागतचक्रिभर्तिका ।
विभक्तवेणी प्रकरेव दीर्घिका ॥ ६० ॥

मनोज्ञमेतन्मुखतस्त्वयेत्यतः
कृतस्मिते भर्तरि कापि कोपिनी ।

चभंज तत् कंजुमतोऽपि यद्यदाः
प्रणय जग्मुर्व्यधिका ह्यासवः ॥ ६१ ॥

स्तनौ नलिन्याः परिहृत्य काचित्
पत्रेण तोयोक्षितमुत्तरीयम् ।
अवीक्षमाणा प्रियमन्वरौत्सीत्
त्वया गृहीतं क नु तस्करेति ॥ ६२ ॥

रतोत्सवे ताभिरिवाभियुक्तं
नुतं पतीनां धरहासहेतिम् ।
विकल्पयन्ताः खलु चक्रवाका—
क्षपावनम्रा विदधुः पुरंध्रीः ॥ ६३ ॥

प्रियस्य कंठं परिरभ्य पीडितं
भयादिवागाधजलव्यवस्थितेः ।
चकार काचिद्धलवालिकारवं
शकुन्तकोलाहलगर्भदुःश्रवम् ॥ ६४ ॥

नतभ्रुवोऽन्या नखवर्त्मगोचरं
युवानुयोगं व्यदितेत्यनुत्तरम् ।
सरस्तरन्मङ्कुजयोर्युजिक्रिया—
मदुष्टयन्विष्टमवल्लितं तव ॥ ६५ ॥

निरीक्ष्य कांतानुनयानुबंधं
तरंगशय्यासु रथांगनाम्ना ।
कवोष्णनिश्वासमताम्यदन्त—
र्घनस्तनी काचिदवश्यकांताम् ॥ ६६ ॥

लीलाजनस्नानकुतूहलस्त्री—
कुचद्रवत्कुंकुमपंकिलांभाः ।
चक्रेशसंयोगकृतानुराग—
माविश्चकारेव सरोवरश्रीः ॥ ६७ ॥

कुतूहली चक्रधरस्य योषितां
जलाशयेऽसौ जलकेलिवैभवम्।
विनिद्रनीरेरुहनेत्रपंक्तिभि—
र्निसर्गसौंदर्यभूनामिवैक्षत ॥ ६८ ॥

विस्पष्टपत्रांबुजकुड्मलस्तनां
समुल्लसत्सारसकंठनिस्वनाम्।
निसर्गरम्यामभिरम्य निर्जहौ
नृपः स दीर्घं नवदीर्घिकांगनाम् ॥ ६९ ॥

उत्कंठकांग्यः कुचपद्मकोशा
व्यालोलनेत्रालिगणास्तरुण्यः।
तमन्वगच्छन् चलितं तटाकात्
सत्प्रेमनिघ्ना इव तन्नलिन्यः ॥ ७० ॥

मुखेन लक्ष्मीं कमलावरुद्धां
बलाद्विवादाय गते नरेंद्रे।
वारांनिधिश्चानुतरंगशाखः
शब्दायमानः पुनरुज्जहार ॥ ७१ ॥

पथा स तेनैव निवृत्य भूपति—
स्तमेव चूतं पुनरप्यलोकत।
नवप्रसूनच्यवनामनोहरं
जनावलुप्तक्षितिकीर्णपल्लवम् ॥ ७२ ॥

मतिस्ततो भव्यशिखामणेरभू—
द्विरक्तिधर्मा विपर्येंद्रियादिषु।
न शाश्वते वस्तुनि दत्तदृष्टय—
स्तदात्वहृद्येषु भवंति गृध्नवः ॥ ७३ ॥

वयो नवं कांतमिदं वपुस्तत्
सुखे जया इव सरार्ताः। (?)

हितात्ममार्येति परं न जाने—
त्यतर्कितोपस्थितमंतकस्य ॥ ७४ ॥

तनोत्यविद्वान् मृगवद्विमोहं
विद्वान् स्वविद्या मृगतृष्णिका चेत् ।
वितीर्यतां तर्हि विवेकदीप्रै—
स्तुल्यंजलिस्सत्यजलांजलिर्वा ॥ ७५

यदि प्रियासाधदिनाशियद्वलं
गुणच्छिदे यद्युपतापसंधियः ।
अनात्मनीनं तत एव तर्हि तद्व—
थैव धिग्धिग् विषयोन्मुखं सुखम् ॥ ७६

इति स्वनिर्वेदविधेयया धिया
विधाय राज्यं निजपुत्रगोचरम् ।
स भूपतीनां निवहेन सेवितो
वनं प्रतस्थे वनजोपमाननः ॥ ७७ ॥

क्षेमंकर प्राप्य यतिप्रवीरं
तपः समाधाय नृपप्रवीरः ।
जगाम दीर्घं नियमस्यमार्गं
निस्त्रिंशधारामुखतुल्यसर्गं ॥ ७८ ॥

रसानलावासदुरंतदुःखं
चिरंतनारातिनुदस्य तस्य ।
किरातजातौ गुणवर्जितायां
कुरंगनामाऽजनि तुंगकायः ॥ ७९ ॥

विरक्तिमात्मा विपुलाद्रिसंश्रये
समाधिमास्थाय शिलातले स्थितम् ।
अवश्यदुर्मीलितवैरया दृशा
सकृत् स पापर्द्धिगतो यतीश्वरम् ॥ ८० ॥

अलब्धिशीलं तमुपेत्य लुब्धको
गुणव्यपोढेन गुणव्यपाश्रयं ।
निपातयामास यतिं स पातकी
भृतं सपत्राकरणेन पत्रिणा ॥ ८१ ॥

यली स भंजन्न हि यालिशस्तनुं
तनूकृतांतं नियमैस्तपोभृतः ।
अलब्ध-भुक्तं दनुव्रजपंजरं
न तस्य शुभद्गुणवस्तुगोपनं ॥ ८२ ॥

वहन्नरत्निद्वयमात्रदेहं
देहं स्वमुक्त्वा मुनिचक्रवर्ती ।
सुभद्रचेतास्तु सुभद्रमध्य-
ग्रैवेयकं प्राप्य चिरं विरेजे ॥ ८३ ॥

स संभ्रमं गुप्तिभृतोऽन्विहंता
कंथर्तकः श्वभ्रमगादुभौ तौ ।
सुखेन ते तीव्रनयान्वभूतां
समाधिकं विंशतिमर्णवानाम् ॥ ८४ ॥

अथ द्विपन्मुख्यहिमांशुराहु—
र्बभूव राजा खलु वज्रबाहुः ।
पुराविदो येन कृताधिपत्या-
मनन्ययोध्यां कथयंत्ययोध्याम् ॥ ८५ ॥

अधीतविद्यस्तु विविच्य वर्ततां
स तत्प्रतापस्य कथं प्रवेचिका ।
अनागतं तेन जगद्धिताहिता
यदायहे तद्गत एव देहिरे ॥ ८६ ॥

वृथा विमुंचन्नयमंबु केवलं
प्रवृद्धसस्यां कुरुते वसुंधरां ।

उपस्तुता तस्य गुणैरसौ पुन-
स्तदैव सर्वं सुषुवे मनीषितम् ॥ ८७ ॥

आन्वीक्षिकी वात्मविदः प्रभेव
दीपस्य मूलेव सुरद्रुमस्य ।
हृद्यावदाता च गुणान्विता च
प्रभाकरी तस्य बभूव कांता ॥ ८८ ॥

तामुद्वहन्नाहितपत्रशोभां
रसोपपन्नामविपन्नपद्मम् ।
करैर्दिशामाक्रमितां बभासे
नृपस्स नित्यं नलिनीमिवार्कः ॥ ८९ ॥

ततो न तन्वी स्मरभोगमात्मन-
स्तमेव भोगं प्रणयादबुध्यत ।
प्रवृद्धरागस्स च तां न च स्त्रियं
निजप्रियां प्रीतिमबुद्ध चाक्षुपी ॥ ९० ॥

उदात्तमूर्द्धा स तया कृतोदयं
दधौ दिवाकादहमिंद्रमागतम् ।
शतक्रतोः प्रातरभीष्टयाहया
दिशा सहस्रांशुमिवोदयाचलः ॥ ९१ ॥

पादापतत्पार्थिवचक्रमुच्चै-
राक्रांतसिंहासनमुन्मदेभम् ।
स भूभृदात्मानमतीव दीप्तं
सुपुत्ररत्नप्रसवेन मेने ॥ ९२ ॥

तस्योदये कांतरुचेर्विदो--
र्भेवा प्रतीचीव भृतं नृपश्रीः ।
चकार सर्वावयवानुरक्ता
कृतप्रणामांजलिजीवलोकम् ॥ ९३ ॥

विभक्तिशीतोष्णसुखक्रमावहा
प्रसादिनश्चोदितमंदमारुताः।
अहर्विभावस्तमवर्द्धयन् क्रमा--
दमुक्तपार्श्वाः परिचारिका इव ॥ ९४ ॥

यथा च यावच्च निगूढशैशवं
नृपात्मजांगानि निगूढतामगुः।
तथा च तावच्च तदीयविद्विषां
सभंगमंगश्लथतैव पप्रथे ॥ ९५ ॥

अजस्रमाह्लादनहेतुभावा--
दयं जनानामलमस्तु चंद्रः।
इदं तु चित्रं यदयं समग्रः
किं चेदलब्धालवयां कलाभिः ॥ ९६ ॥

तयैवं नूनं नृपनंदनस्य
पादौ च पाणी च मुखं च तस्य।
विस्तीर्णवक्षःस्थलकेलिवासः
क्रीडागतश्रीपरिवारपद्माः ॥ ९७ ॥

समानमानंदननामविभ्रत--
स्तदस्य भूनंदनयौवनोत्सवे।
सपत्ननिश्वाससमीरणैस्समं
पृथू च दीर्घौ च बभूवतुर्भुजो ॥ ९८ ॥

अलंघ्यमन्यैरतिसर्वमानवं
तमुन्नतानामवनामकारणम्।
स्वबुद्धिवदयं समपश्यदन्वहं
प्रतापमात्मीयमिवापरं नृपः ॥ ९९ ॥

---

१ अवनामकारण, नम्रताकारणम्।

ततस्तृतीये जरयापहास्ये
विरक्तचेता वयसि क्षितीशः।
सितातपत्रं स्वसुताय दत्वा
वनं तपस्थानरुचिः प्रतस्थे॥ १००॥

आनंदने नग इवोदयधाम्नि राज्यं
प्राज्यं तुषारकरबिंबमिवोज्जगाम।
दीर्घ करेषु विदधो कुमुदानुकूल्यं
किं तु क्रमादपि दिशं न परां प्रभेदे॥ १०१॥

अधिकविनमितायां तस्य तंडेन भूमौ
भिय इव विनिपाता सर्वदिग्भ्यो निवृत्त्यां।
उपरि स परिरेभे पार्थिवेष्वत्युदात्तः
स्थितिसुखमधिगंतुं कल्पवल्योवलक्ष्म्या॥ १०२॥

आज्ञाव्याहृतवीरपार्थिवनमन्मूर्द्धस्थरत्नावली
ज्योतिश्चक्रवितानतोयचिकसत्पादारविंदद्वयः।
ताराशुभ्रयशःप्रवेशधवलाः कुर्व दिशाः सर्वदा
गीर्वाणावनतक्रमः स बुभुजे भूरिश्रियं भूपतिः॥ १०३

इति श्रीवादिराजसूरिविरचिते श्रीपार्श्वजिनेश्वरचरिते
महाकाव्ये आनंदराज्याभिनंदनं नाम
अष्टम सर्गः।

---

१ तंडेन-प्रतापेन। २ निवृत्त्या—विपरीतवृत्त्या।

# नवमः सर्गः ।



पूर्वपुण्यपरिपाकनिर्मित-
श्रीविवेकविपुलः स भूपतिः ।
सर्वमंगलनिकेतनं जिन-
श्रीमर्हं व्यधित कामदोऽर्थिनाम् ॥ १ ॥

तं पुनर्जितमर्हं दिदृक्षवः
तत्त्वनिश्चयनमुज्जिघृक्षवः ।
स्वस्थसौख्यमभिनिर्विवक्षवः
तत्पुरे समुदगुर्मुमुक्षवः ॥ २ ॥

वन्यवर्त्मगतयश्च तीव्रसं-
वेगिनश्च शिखिपिच्छपाणयः ।
दर्प्यदिन्द्रियमदद्विपव्रज-
स्पष्टसंयमनकर्मकर्म्मठाः ॥ ३ ॥

व्यूहसद्गुणमणीनसद्गदा
मुक्तिवर्त्मनि विपत्रयायिनः ।
निर्भयास्तदपि कामतस्करा—
दूरदर्शनबलापसारिणः ॥ ४ ॥

मार्गणान्वयविवेकिनः क्रिया-
रोपितस्थिरगुणाः सुवंशजाः ।
मुष्टिदार्यतनवश्च संगर—
स्थायिनश्च दृढधर्ममूर्तयः ॥ ५ ॥

शश्वदभ्यसन् निस्पृहक्रिया
वृत्तिपंचकनिरोधचुंचवः ।

संयमस्थिरपदप्रवर्तना
लब्धरम्यविलसद्विभूतयः ॥ ६ ॥

कामनिग्रहनिराकुलं मनो
बोधयंत इव भोगनिस्पृहाः ।
सर्वतः स्वमनवध्यतागुणं
सूचयंत इव चांबरत्यजः ॥ ७ ॥

तीव्रयोगपवनप्रवर्तना
बाह्यकर्मपटलोपमावहम् ।
दुर्वहमलमशक्यशोधका—
यकर्मोपनतलिप्तबिभ्रतः ॥ ८ ॥

भूरिजन्मजलधिं परीषह—
ग्राहलीढतनवोप्यविक्लवाः ।
पारसंनिधिनिरूपणा समुत्—
साहता इव लघू तितीर्षवः ॥ ९ ॥

भूपतिर्यतिसमूहमुल्लस—
त्किंबंधुरमथाभिवंदताम् ।
तत्पतिं पुरुमतिपुरस्कृत—
प्रश्रयो वचनमित्यवोचत ॥ १० ॥

शुद्धबोधजठरप्रदेशनं
भावितानवधिकश्रुतोदधेः ।
स्वल्पकायसुघटोद्भवस्यते
वस्तु किंचिदधिगाह्यमस्ति किम् ॥ ११ ॥

तत्प्रसीद मम वस्तुसंशयं
छिंद तेन च निरंधि कल्मषम् ।
तद्वचोनिचयशाणतेजसा
भव्यचित्तमणिशुद्धकारिणा ॥ १२ ॥

यंधुरेव स पुनर्मनस्विनः
संधिविग्रहविधौ विधित्सते ॥ १९ ॥

द्रव्यकर्तृकसमत्वयोजना
युज्यते न जिन नित्यवेश्मसु ।
तादृशो हि सुविवेचयंत्वदैः—
न तेष्वकृतकत्वनिर्णयः ॥ २० ॥

संति ते सुरविमानसंनिभाः
सर्वलोकनिलये जिनालयाः ।
भव्यकर्मकृतनित्यवृत्तयः
प्रस्फुरन्मणिविचित्रमूर्तयः ॥ २१ ॥

यत्र तेन भगवद्गृहानताः
संति चामरविमानपंक्तयः ।
दीप्तदीप्तिमयमंडलोदरो—
द्भासिभागवर्तिबिंबभूषणाः ॥ २२ ॥

इत्यनुस्तवसमुद्रसंभवं
तस्य वागमृतमुर्व्वरापतिः ।
आदरातिविवृतश्रवः स्फुटैः
स पयो परमनिर्वृतिः पदम् ॥ २३ ॥

प्रातनुद्यति ततः प्रभृत्ययं
तद्गतस्य महतस्तमोपहे ।
अर्घ्यमंजलिघटोपनीत—
मभ्युजहार जिनराजवेश्मनः ॥ २४ ॥

तत्र धर्मरसिके सति प्रजाः
संपदो निरविशन्निरंतराः ।
निर्वृतांभसि तरो हि तस्य
शाखा भवंति सफलप्रक्लृप्तयः ॥ २५ ॥

पुण्यकृत्स्वयमकृत् सदर्शनोऽ
गण्यसेव्यगुणराशिरप्ययं ।
भण्यतां बुधजनैः कथं हि पा—
ङ्गुण्यसेवमनसा दधाविति ॥ २६ ॥

दंडमुद्गरमुदस्य जाग्रता
क्षत्रमंडपतले कृपालुना ।
तेन धेनवयिवाररक्षिरे
सर्वथा सुखशयालवः प्रजाः ॥ २७ ॥

तुंगसाहसमतंगसंनिभं
तं प्रति प्रविदधुः दिगंगनाः ।
रंतुमिच्छवयवावकृष्य
रत्नावभासुरकरप्रसारणाः ॥ २८ ॥

भूमिभृत्सु स विभज्य साशित
शासनेन कृतसीमभुक्तिकं ।
युज्य दैवतनुतिष्ठपत् स्थिरे—
पतनुराज्य देवतां ॥ २९ ॥ ( ? )

क्षुण्णवर्त्मगमनादभश्यता—
मग्रतोऽमृतरसप्रवायितम् ।
शासनेन खलु तस्य नश्यतां
विप्रकीर्णविषकंटकायितम् ॥ ३० ॥

तस्य भित्तिषु दिशां यशश्च
विक्रांतशत्रुविजयक्रमागतं ।
आददे न वसुधाविधाकृत—
स्फारयां तिथिमविलासडंबरम् ॥ ३१ ॥

मातरेव जिनदेवतास्तवं
संविधाय स कदाचिदीश्वरः ।

आदरादिकमलोकयत्पुरः
स्फारचारुमुकुरोदरे वपुः ॥ ३२ ॥
इंद्रनीलरुचिरोमविस्तरे
मस्तके पलितसूचयः क्वचित् ।
तेन संददृशिरे निशामय—
श्यामिकास्पृश इवेंदुरश्मयः ॥ ३३ ॥

तन्निबद्धपलितांकुरं शिरः
प्रत्यबुध्यत स बुद्धिमत्प्रियः ।
तत्क्षणे विदलितं जरद्वयः
कालसर्पदशनांकुरैरिव ॥ ३४ ॥

इतोऽभ्यधत जरी शिरस्ययं
लग्न एव सितवाललीलया ।
उल्लसन्मदपरिद्धिलासिनी—
हासचंद्ररुचिबंधुपांडिमा ॥ ३५ ॥

मुंच मां तरुणि भोगलालसे
तावदल्पवयसा विरूपकम् ।
यावदेव न जुगुप्सया त्वयि
स्मेरचारुवदनो वधूजनः ॥ ३६ ॥

वज्रबाहुमभिषिच्य स क्षिते
रक्षणाय तनयं ततो नृपः ।
निर्जितप्रसवकार्मुकैर्वृतो
राजभिर्वननिवासमव्रजत् ॥ ३७ ॥

निर्विमुच्य दलितस्पृहागुण—
श्रंथिरंगबहिरंगमंडनम् ।
आददे न निधिगुप्तिसंनिधौ
योऽग्रगोचरतमोपहं तपः ॥ ३८ ॥

सर्वनिस्पृहतयैव तन्वत-
स्तन्मुनेः सुचिरमात्मभावनाम् ।
अन्यदेव सुखमुद्भूय य-
त्स्वर्गिणां च न चापवर्गतः ॥ ३९ ॥

ईश्वरः प्रणिधिना तनूकृत—
क्लेशवेशसमयामयो मुनिः ।
अंतरात्मनि समाधिभावना—
भावित स्थिरपदेन चेतसा ॥ ४० ॥

भावयन्भगवदर्हदर्पितं
नित्यशः प्रणवमंत्रमुत्तमम् ।
अंतरायविजयादवाप्तवान्
प्रत्यगात्मगुणचारुचेतनाम् ॥ ४१ ॥

बद्धकर्ममलघातहेतुम—
भ्यस्यतश्च नियमाद्यमादिकम् ।
आविवेकमति तस्य योगिनो
ज्ञानदीप्तिरभवत्प्रकर्षिणी ॥ ४२ ॥

निर्बुदस्य सवितर्कसाधनं
तद्विपक्षपरिभावनाबलात् ।
तीर्थकृत्वमहिमोदयावहां
भावनामवहदंतरात्मनि ॥ ४३ ॥

तीव्रसंयमगुणानुबंधिन —
स्तस्य भौतिकमभूत्तनं वपुः ।
तद्दशां नरसाधनश्रिया
तत्पुनर्गुणमयं व्यवर्द्धत ॥ ४४ ॥

एकदा तनुविसर्गपूर्वकं
योगलग्नमना महामुनिः ।

चित्रलेख इव सुस्थितोऽभवत्
श्रीरपूर्वकमरण्यमाश्रितः ॥ ४५ ॥

संयमस्य चरमस्य दुर्वहं
निर्वहं तमनुविस्मयावहा ।
प्रत्यव्यस्तविनयादिवौकसो
देवतास्तमनमन्मनस्विनम् ॥ ४६ ॥

तत्क्षणस्मृतिहताप्रसंगतो
दृश्यते स स भवांतरद्विषा ।
निर्विमुच्य नरकं वनोदरे
तत्र केसरिषु जन्मजग्मुषा ॥ ४७ ॥

क्रोधभीमकुटिलभ्रुवा मुहु—
स्तेन वर्धरमकारि गर्जितं ।
वृद्धिमद्वयफलाय तद्वन—
कोशयिमृगयूथशन्दितैः ॥ ४८ ॥

यजिहिंस तमपांसुलं हरि—
स्तत्कथं नु कथयामि निर्भयः ।
पापकृच्चरितजल्पनादपि
श्रेयसे भवति यत्प्रतिच्युतिः ॥ ४९ ॥

अध्युवास नरकं स केशरी
जीवितस्य विनतो तमःप्रभम् ।
दुःखितो भवति यद्युदासिना
तत्सु किं पुनरमतक्रियापरः ॥ ५० ॥

तद्विमुच्य वनहिंस्रभूपितं
निर्मलेन मनसा मुनिर्मेपुः ।
आनतामर्गनिवासिनामय—
मुद्बभूव सुहृती स ईश्वरः ॥ ५१ ॥

वैद्युतं मह इवैकसंहतं
तद्वपुर्वहलदीप्तिबृंहितम् ।
अप्यनंगमदमंथरामरी—
लोचनप्रियमजायत स्फुटम् ॥ ५२ ॥

कामिनीचरणकिंकिणीरवै-
रेकदा रतिविलासकेलिषु ।
आददे समुदमुन्मदः क्वणन्
मन्मथद्विरदडिंडिमोपमैः ॥ ५३ ॥

सिंहविष्टरगतः स लीलया-
लोकयद् द्युपतिलोकवेष्टितः ।
एकदा चितिमरो दिवौकसः
संभ्रमं न जयकारकारिणः ॥ ५४ ॥

एकचारममरीस्तनस्तनो—
त्तानितोऽरमत सोऽमरैस्समम् ।
श्रव्यगीतकलकंठकिन्नर—
व्रातदत्तरसनिर्भरेक्षणः ॥ ५५ ॥

अत्यजन्निह वनोकशावक्रमं
लीलया स वनितासखः क्षणम् ।
पारिजातकुसुमाभिवासितः
स्पंदितोपवनमंदमारुतैः ॥ ५६ ॥

भाविनीमनुपगां जवादसौ
मोहयन्मणिगृहं न्यवीक्षत ।
प्रत्यवेक्ष्य मुमुहे मुहुस्तया
तद्वपुः मयहृ तिर्त्तिविवितम् ॥ ५७ ॥

---

१ विष्टर इति मुलाहपाठः ।

सिंधुकेलिकृतये कदाचन
व्योमयाहितविमानपंक्तिभिः ।
तेन देवनिवहेन गच्छता
जंगमेव नगरी विनिर्ममे ॥ ५८ ॥

वारिधौतरसितो विभासुर—
स्त्रीकृतो जलविलासकेलये ।
व्योमतः स निरमज्जदेकदा
वारिवाह इव विद्युतावृतः ॥ ५९ ॥

अर्धतुर्यसदरत्निसंमितं
श्वासि मासि दशमे ददद्वपुः ।
सोऽन्वभुंक्त दिविजेन्द्रवैभवं
विंशतिर्विमलधीरुदन्वताम् ॥ ६० ॥

तस्य वत्सरसहस्रविंशति—
र्व्यत्ययस्मृतिगता सुनाशिनः ।
सन्निधानमगमद्गुणोदधे—
स्त्यसारभवसागरावधिः ॥ ६१ ॥

तत्र सत्यवसरे स लीलया
वेपतेस्म हरिविष्टरं हरेः ।
धर्मतीर्थमवतारयिष्यत—
स्तस्य संसदिव पश्चिमं वयः ॥ ६२ ॥

तद्यथावदवधाय संभ्रमा—
दासनात्सपदि सप्तकं गतम् ।
तं ननाम जयकारपूर्वकं
मौलिकूटनिविडाहितांजलिः ॥ ६३ ॥

तत्क्षणस्मरणमात्रसंगता
संजगाद मुदिशां कुमारिकाः ।

देवतास्वकुलगोत्रशेखर—
श्रीकरामलजडाशयाश्रयः ॥ ६४ ॥

भाविनीं भुवनभर्तृभारतं
मर्त्यलोकतिलकायताकृतिम् ।
भक्तिवंधुरमुपाध्यमन्वहं
विश्वसेननृपतेर्मन प्रियाम् ॥ ६५ ॥

आशयामरपतेररसर्धया
'दुर्वहस्तनभरा वरांगनाः ।
अंग जग्मुरभिचारणासिताः
स्वर्गतो मदनवारणासिनाः ॥ ६६ ॥

अप्रकाशवपुरस्तलोदरीं
नामवेक्ष्य खलु दिव्ययोषितः ।
इत्थमस्तुवत विस्मिताविदः
स्फीतमत्प्रमदमन्थरेक्षणाः ॥ ६७ ॥

यंत्रमस्यति सतीमिनां वृषात्
कियच सदृशं मृगीदृशः । ( ? )
संहति स्वयमियं हि तावता
मेकशास्त्य पदं हि यो गुणाः ॥ ६८ ॥

नेत्रमेव नयनाभिरामया
मध्यतेन वसुधा रुचे रुचा ।
विग्रयेव निरवद्यवृत्तया
चेतसं च सुदृशा जगत्तमः ॥ ६९ ॥

सुतवो तु वदनेन बंधुना
पद्मसारविजयी निशाकरः ।
संविभागविधिनेव यत्नयोः
कांतिसंगदुभयोः प्रवर्तते ॥ ७० ॥

मुख्यसौरभसमीरसंगत—
स्पंदितादरसरागपल्लवा ।
निर्मलस्मितसुधानवोद्गमा
स्पर्द्धते मधुवनश्रिया वधूः ॥ ७१ ॥

वालिकातरलनेत्रयुग्मनि—
प्सूतनिर्मलमयूखलेखया ।
सिंधुवारकुसुमावतंसन-
ग्रंथनामिव करोति कर्णयोः ॥ ७२ ॥

आलि पश्य मृगलोचनाकुचो
तारहारविषयलेह्निनो तकौ
कौस्तिवंधुरबृहत्तरंगिणी—
चक्रवाकमिथुनायताविमौ ॥ ७३ ॥

कोमलाकृतिमृगोलशंकया
लीलयोन्नमितकंठकंदलाः ।
सुंदरीकरनखत्विषोमलाः ,
केलिहंसशिशवो लिहत्यमी ॥ ७४ ॥

भाति तन्वधि नितंवमंडलं
गात्रमध्यभृत्कुच नतभ्रुवः ।
पीवरस्तवकभारसुलसद्ध-
लिमध्यमिव मूलबृंहितम् ॥ ७५ ॥

प्रक्वणन्मणिमनोज्ञमेखला
वालहंसवनिता विराजते ।
विश्वसेनमनुजेश्वरांगना
निम्नगा जघनसैकतस्थली ॥ ७६ ॥

चंकनत्कनकभोरणच्छवि-
स्फारमूरुयुगलं मृगीदृशः ।

कामगंधगजबंधनोचित—
स्तंभगौरवगुणं प्रपद्यते ॥ ७७ ॥

न त्रियं सुतनुरम्भरोगना
गन्वरी न कमलाकगदस्मा ।
केन चेनमनयोरियं युतः
पादयोरकृतपंकजश्रियम् ॥ ७८॥

कांतिशृंखलितदिग्वधूद्‌या
निर्मलापि तुहिनद्युतेः कला ।
न प्रशस्तमनयोपमीयते
जगति यद्द्वितीयया ॥ ७९ ॥

संभ्रमावनतमस्तकास्तुतां
संनिधाय सुरनायिका स्तुताम् ।
वद्धभावमभजद्धनाधिया
तत्प्रियैकपरतंत्रया धिया ॥ ८० ॥

आनिनाय सुतनोरसायनं
तासु काचन चकोरलोचना ।
येन मामृतमयीव निर्बभौ
सेवितेन दयिताचनीपतेः ॥ ८१ ॥

हेमनालकमलेश्वराऽकरी—
त्तत्पुरो मुकुरचारुमंडलम् ।
तन्मुखप्रतिमयोदरस्थया
यस्य सृष्टिरगमत्कृतार्थताम् ॥ ८२ ॥

हारयष्टिमकृतेतरामले
सुभ्रुवः स्फुरितद्युतिमौक्तिकाम् ।
अल्पशोभत यया तदाननं
तारकावृतमिवेंदुमंडलम् । ८३ ॥

अंगुलीदलविलासघट्टना-
लीढलालकलवल्लकीगणे ।
रागराजमुदपादयत्परा
पंचमं युवतिचित्तरंजनम् ॥ ८४ ॥

किन्नरग्रथितबंधुरबंधुर—
ग्रामरागरुचिरांगहारया ।
अन्ययाभिरुरुचे नतभ्रुवे
सुभ्रुया रचितलास्यलीलया ॥ ८५ ॥

राजराजनियमानुबंधिभि—
र्बंधुरं नभसि निर्मितामरैः ।
हेमवृष्टिरभवन्नृपांगणे
यत्प्रभाकपिशिता दिशोऽखिलाः ॥ ८६ ॥

विश्वदिक्प्रकटपाटकच्छवि-
प्रस्फुटोल्लसितवाडवानलः ।
निष्पतन्मणिमरीचिभंगुरो
व्योमवारिधिरलंव्यराजत ॥ ८७ ॥

अन्विताऽन्वितविपातिनूलना—
नेकरत्नरचिमेचकं वचः ।
आदधौ तनुभृतामभित्तिकं
चित्रमेतदिति विस्मितां मतिं ॥ ८८ ॥

आस्खलन्निपतदिंद्रनीलनि—
र्भासजालबहलांधकारिते ।
भानुभानुभिरभावि भावित—
व्योमनि क्वचिदकांडकुंठितैः ॥ ८९ ॥

# दशमः सर्गः।



अथ दिविजवधूपवित्रकोष्ठं
जठरनिवासमुपेतमानतेंद्रम्।
अवहत दयिता नृलोकभर्तुः
खनिरिव सारमणिं निगूढकांतिम्॥ १॥

अधिवसति जगद्गुरौ मृगाक्षी
निजमुदरं नितरामिवाचकाशे।
उपनततनुपनोदयप्रसंगा—
द्भवति हि रुच्यतमापुरंदराशा॥ २॥

अहमहमिकया स्वभावशुभ्रै—
रणुवबृधे वनितागुणैः मनोज्ञैः।
जिनवरमुदरे तदा वसंतं
स्वयमिव सेवितुमागतैरनंतैः॥ ३॥

अधिनतजठराशयोऽपि देव—
स्स खलु विभज्य निरूपयांबभूव।
प्रविलसदनुपल्लवद्विजोऽथ
त्रयमयदक्तितयेन विश्वनेयम्॥ ४॥

प्रतिवसदपि तद्वपु· पवित्रं
परमभवत्सुरसेनहीनधाम्नि।
भवति हि कमलानपंकदिग्धं
नियतिं वसायदि नाम पल्वलस्थलम्॥ ५॥

हुतभुजमरणीव देवदेवं
नृपवनिता सुषुवे जगत्पवित्रम्।
अवनमसविभेद साधुसार—
स्फुरितरत्नित्रिप्रसमावृतांगयष्टिम्॥ ६॥

उपनतमुखसुप्रसन्नधिकं
निशमितमर्वरजः कणानुबंधम् ।
जिनवरजनने जगत्समस्तं
क्षणमिव मुक्तमभूदमुक्तरागम् ॥ ७ ॥

नवपरिमलसौरभावकृष्ट—
भ्रमदलिमेचकितान्मरुत्पथाग्रात् ।
अविरलबहला सुरद्रुमाणां
नृपतिगृहे निपपात पुष्पवृष्टिः ॥ ८ ॥

जय जय भगवञ्जिनेंद्रचंद्र
त्रिभुवनजीवनिकायनित्यबंधोः ।
श्रुतिपथमधुरासरस्वतीयं
गगनतले सकले समुत्ससर्प ॥ ९ ॥

जिनजननमवेत्य देवराजः
प्रचलत्पीठतया सहामरेंद्रैः ।
रुचितसघनवर्त्मना प्रतस्थे
निटिलनिवेश तवाणिपद्मकोशः ॥ १० ॥

परिपतद्मरद्रुमप्रसूने—
श्चलदिभपर्वतमुद्रिताखिलाशम् ।
अमरनटिलतासहस्रे—?
र्वनमिव जंगममंवरं बभूव ॥ ११ ॥

अनिमिषमणिभूषणाभिसर्प्पद्धि—
र्विधरुचिप्रसरावरुद्धदिक्कम् ।
जलधरपथमदभ्रमभ्रशून्यं
शतमखचापमयं व्यधत्त विश्वम् ॥ १२ ॥

श्रिय इव सदृशो विभक्तलास्या
कृतपदसंधिमिरूहिरेऽचरंदैः ।

प्रविकचकलधौतपद्मपद्मै—
गंगनसरोवरतत्क्षणोपलब्धैः ॥ १३ ॥

प्रविलसदमरेंद्र पद्मराग—
स्फुरदुरमालिमरीचिवीचिगर्भम् ।
मधुरमिव विनिशम्य देवगीतं
किशलयितं रसिक नभो विभासे ॥ १४ ॥

घनपथमुकुरोदराचकीर्णैः
कनकदलविलसन्महोत्पलौघैः ।
रतिमधुरतया दये दिवांको
युवतिमुखप्रतिबिंबविभ्रमश्रीः ॥ १५ ॥

स्फुटरुचिरचकाकरावरुद्धा
त्रिदशगणैर्विविधा तदायुदालिः ।
जलधरनिकुरं विनिर्गृहीत—
क्षणरुचिरज्ज्वगुणैरिव प्रयुक्ता ॥ १६ ॥

दलदिभकरटच्युतश्च पश्चा--
दलिपटलाभिगमादिव प्रवृद्धः ।
अजनयदजरन्मदप्रवाहः
सुरपथकर्दमविभ्रमं जनस्य ॥ १७ ॥

अविरलमवलीढदिग्विभागा
रयचलिताः कलधौतवैजयंत्याः ।
ततमुखमहिमोपलब्धदीर्घ--
स्थितय इवाविभुलङ्हिगुणौघाः ॥ १८ ॥

हयगवयगजादयो वहंतो
द्विविजपतेस्तनुरूपभूषणाद्या ।
प्रतिपपुरहरन्मनांसि पुंसां
पिहितदिशस्तदनन्ययोगवृत्या ॥ १९ ॥

मृदुरसगमनेन वारणासौ
सुरपतये समुपस्थिताय देवी।
कृततनयस्सनाथमातृपार्श्वे
जिनशिशुमुत्प्रमदा शची जहार ॥ २० ॥

अभिनवजिनदेवचंद्रदृष्ट्या
निटलहटत्सुरपाणिसंपुटौघैः।
अविकचदलदैर्घिके घनाल—
स्थगितमिवारुरुचे नभस्तटाकम् ॥ २१॥

सरभसहतदुंदुभीस्वनौघः
सुरजपनीस्वनबृंहितप्रसुप्तिः।
व्यधदयदिव दिक्षु संधिबंधं
भयरसराभसिकभ्रमद्गजासु ॥ २२॥

प्रविततनिजपाणिपल्लवेऽसौ
भुवनगुरुप्रियया समर्पमानः।
स्तुतिमुखरमुखांबुजेन धृष्णा
प्रतिजगृहे स करिकर्मजिष्णुः ॥ २३ ॥

स्फुटदरुणपलाशपक्ष्मकल्पं
प्रणिदधतापि मुहुः सहस्रमक्ष्णाम्।
जिनवपुषि विदो जना न लेभे
भवहरधामभृति प्रमोदतृप्तिः ॥ २४ ॥

प्रतिनवनयनाभिरम्यदीप्तिं
बहलतमालरुचिं बहज्जिनेंद्रम्।
स दिनकृदुदयादितुल्यलीलः
कुलिशधरः प्रतिमंदरं प्रतस्थे ॥ २५॥

प्रविसरदमृतोदबिंदुलब्ध—
स्फुरजडिमासनमेरुगंधबंधुः।

अलिरवमुखरश्च मातरिश्वा
स्वयमिव वर्त्म दिशं ववौ तदग्रे ॥ २६ ॥

पटुरवपरिवादिनीकहुहुं
प्रमुखमुखोऽततांडवादिभेदम् ।
समरसहृतसर्वजीवजेतो
वियति जनस्तव गीतमुज्जजृंभ ॥ २७ ॥

अकृपत कृतवेषयानभूषा
विकृतरसाः खलु किल्बिषाः प्रमोदम् ।
बहुरसपरिहासहेतुनाद्य
स्फुटपटवस्त्रिदशाधिपस्य देवाः ॥ २८ ॥

जलभरपटलोपपावेशा—
स्क्षणविरहव्यथयाप्यलीढपूर्वाः ।
प्रतिपदमुदवेजयन् मृगाक्षि
पथि मरुताममराः प्रहासहेतोः ॥ २९ ॥

मदकरिचरणाभिघातपिष्टे—
र्घनपटलैर्मुमुचे पयः प्रपूर ।
परिमलमदयिदुना धरित्री
सुरभिरभाव्यत येन सर्वतोऽपि ॥ ३० ॥

अपसरत पुरः प्रजातजैर्नी
मानुतनुतिर्मतिविभ्रमच्छिदायै ।
इति जुघुपुरमोघमिंद्रसेना—
गतिनियमाधिकृताः प्रसह्य लेखाः ॥ ३१ ॥

जिनपतिमवलोक्य रत्नचक्षु—
र्निजशिखरैकशिखामणिं नगेशः ।
मुदित इव भृशं ननर्त वायुः
प्रचलितकल्पतरुप्रपीनबाहुः ॥ ३२ ॥

अविरलधवलातपत्रशुभ्र—
त्रिदशपथः स दिवौकसां प्रवाहः ।
स्वयमिव जिनदेवमज्जनार्थं
गिरिशिखरं प्रययौ पयःपयोधेः ॥ ३३ ॥

प्रतिफलितनिलिंपभूरिकोला—
हलजयकारबृंहदरीमुखौघैः ।
गिरिरितुमुकुलस्थलाब्जपाणि-
र्भुवनगुरुस्तवनं खलु व्यधत्त ॥ ३४ ॥

पृथुमणिमयपांडुकंबलाख्य-
प्रथितशिलास्थितरत्नसिंहपीठम् ।
जिनपतिमधिरोप्य देवराज—
स्नपनविधावधिकोत्थमभ्ययुक्तः ॥ ३५ ॥

अमृतमुपनिनीषवो नगेंद्रा—
दमृतभुजः सविलासमासमुद्रात् ।
अविरलगतयो नभस्यभूवन्
दृढतरसेतुबंधतुल्यलीलाम् ॥ ३६ ॥

किमगमदमृतार्णवस्स्थमर्त्या
द्विविजगिरिं दिविजैस्तोपनिन्ये ।
अविदितमिति केवलं द्युलोके
नभसि वहनमलस्तु दुग्धराशिः ॥ ३७ ॥

प्रविकचकुमुदैरिवोद्बभासे
पयसि तरत्तरलैस्तु तारकौघैः ।
तदुभयतटवृत्तिभित्तिस्तु लेभे
प्रविततशीकरभूरिचित्रमश्रीः ॥ ३८ ॥

बहुबहुमुखयाहुलीढपृष्ठैः
कनकघटैः स्म वृषाकपिर्विरेजे ।

भुजबलदलितोद्धशैरिवाद्रेः
पृथुतरशृंगसहस्रभूरिभारैः ॥ ३९ ॥

जिनवरशिखरेंद्रमध्यवर्त्म
सुरहसुदुंदुभिमंद्रनादगर्जः ।
परिगतवनितातडिल्लताकः
पवनपथं पिदधन् महेंद्रमेघः ॥ ४० ॥

प्रतद्विकदावनीविलोल—
द्बहलपयः प्रसरेण शैलभर्तुः ।
त्रिभुवनगुरुभारखिन्नखिन्नै—
रिव सकलैरपि सिश्विदे तदंगैः ॥ ४१ ॥

सममहसि महागिरींद्रतल्पे
प्रदरभृते जिनमज्जनांबुराशौ ।
अवमथनसुखागतो वदंति
कुलिशभृतो दिविजैर्ध्रुवं विजज्ञे ॥ ४२ ॥

पृथुतरविटपावबद्धपाता—
वभुरधिकं बहलाः पयःप्रवाहाः ।
जिनवरसवनोत्सवे नियद्धा
गिरिपतिनेव सितायलाः पताकाः ॥ ४३ ॥

अतिजवकृतपातपूर्वतल्पो—
च्छलितनभः प्रसृतैः पय:कणौघैः ।
भगवति कुसुमोपहारलीला—
मिव मुदिताः ककुबंगना विमेजुः ॥ ४४ ॥

अभिषवजलभूरिपूरमग्नै—
रमरगिरेः शिखरैश्च सामिदग्धैः ।
अधिजलनिधिदेववृंदमुक्त—
भ्रमदुरुहेमघटोपमोपयाँकैः ॥ ४५ ॥

अतिगुरुगुणजैनभक्तिगर्भा
भृशमभृतः स्नपनोदकावगाढाः ।
अधिकृतजलकेलयः स्वकोला--
हलवधिरास्तु दिशस्तदेव चक्रुः ॥ ४६ ॥

गिरिवरमभिषिच्य देवमेवं
त्रिदशपतिः स बहुकृतप्रमोदः ।
जिनगुणमणिबंधबंधगेयं
भुवनगुरोः स पुरोऽमरो ननर्त ॥ ४७ ॥

अगणितयुजिभूरिदीर्घशाखा
नटदमरैः स लसल्लतासहस्रैः ।
स्फुटरसमनटन्नगेंद्रतल्पैः
कुलिशधरश्चलतीव कल्पवृक्षः ॥ ४८ ॥

उपनतदिविजांगनामनोज्ञ--
क्रममृदुगेयगुहामुखप्रणादीम् ।
नटदनिमिषभर्तृपदहेल—
हितमसहिष्णुरिवाचलश्च कूज॰ ॥ ४९ ॥

अतिचिरमतिसंविधाय पूजा-
मखिलगुरोरमलत्रिबोधबंधो॰ ।
मुकुलितकरपद्मबंधुताल:
स्तुतिमनुरागपरो हरिश्चकार ॥ ५० ॥

जय जिन भवनोपकारसार-
त्रिदिवनवागमदिव्यबोधवेद्यः ।
जय जय जिननिश्चशादिसात्त-
स्थितिसमयेप्वबुद्धविश्वतत्त्व

इदमसकृदनादिकर्मबंध-
प्रबलतमोवृतिमञ्चिवेकनेत्रम् ।

कथमिव भगवंस्तव प्रसाद-
स्वहितमृते जगदीक्षितं क्षमेत ॥ ५२ ॥
शिवपुरशरणावहं तथास्तान्
व्यपनयदुर्नयकंटकप्रबन्धान्।
इह कृतगमनानुरोधयोग्या-
नमृतवचोमयशवलप्रधालैः ॥ ५३ ॥

चिरमिति रचितस्तवं जिनेन्द्रं
सुरपतयः समुपेत्य वारणासीम्।
अभिगमकृतसंभ्रमाय राज्ञे
सपदि समर्पयचस्तदेवमूचुः ॥ ५४ ॥

अथमिह नियमो दिवस्पतीनां
जिनपतयो यदमीभिरभ्युपेतः।
नृपनिरुपमपंचसूत्सवेषु
स्थिरगुरुभक्तिभिरर्चितावमक्षि ॥ ५५ ॥

तदमुमुपनिधाय मातुरग्रे
कृततनयं नयवर्मतत्ववेदी।
गिरिपतिमुपनीयनाकनाथ-
रमृतजलैर्भगवान् समभ्यषेचि ॥५६॥

अनुपमसुखधामपार्श्वसूरया
सकलजगद्विषयप्रभावभूम्ना।
सविनयमयमुच्यतां समस्तै-
र्भुवनगुरुर्वसुधेशपार्श्वनाथः॥ ५७ ॥

निरवधिनिजनिर्मलावबोध-
व्यवसितविश्वविशेषतत्ववृत्तिः।
त्वमिव च न परो जनः कृतार्थो
यदसि गुरुर्जगतां गुरोरपि त्वम् ॥५८॥

क्षणदर्शनपूर्वमीलिताक्षी
    स्मरविवशा तु तमेव भावयित्वा ।
अपसृतमपुनर्विलोकयंती
    निजमतिमेव निनिंद कापि मुग्धा ॥ ७२ ॥

तदनु गहदयैव सौधशृंगे
    विषमतले पदसंधिमादधाना ।
द्रुत द्रुतिभयनोदिता सखीभिः
    कथमपि कान्चन चेतनां प्रपेदे ॥ ७३ ॥

विकसितवदनांबुजा वराच्छ--
    स्फटिकगृहस्य शिरोगतानतांगी ।
कुत्रनटपरिभाव्यलेख्यपत्रा
    नभसि गता नलिनीव निर्बभासे ॥ ७४ ॥

निजगृहगुहरस्थिना गवाक्षा—
    गतनृपनंदनदर्शनोत्कदृष्टिः ।
रतिरसदयतानुरोधमेका
    न कमपि चित्रमयीव बुध्यतेस्म ॥ ७५ ॥

मरकतभवनात्कुमारमन्या
    कनकमयीव दिदृक्षया व्रजंती ।
जलधरपटलादिवांजनाद्रि
    प्रतिचलितेव तडिल्लता चकासे ॥ ७६ ॥

नृपतनयकृतस्मरा नतभ्रूः
    स्वयमवलोक्य च नीविमुल्लसंतीम् ।
अवनतवदनैव सामिदृष्ट्या
    निकटगतालपया ॥ ७७

क्षतिरियमसमायुधस्य दस्यो—
रिति निजगाद विनापि शब्दमेकाम् ॥ ७८ ॥

मदकरिमुखरम्यहेमपट्टे
कमलदृशः प्रतिबिम्बिताश्च काश्चित् ।
रतिपतिरचितैर्द्वितीयकायै—
र्गजमिव तेन समं समध्यरोहत ॥ ७९ ॥

अपहृतमपि तं नितंबवत्योः
नृपसुतमेव पुरो निरीक्ष्यमाणः ।
स्मरहृतमयस्तु राजवीथे-
रविकलतन्मयतामिवाभिजश्यः ॥ ८० ॥

इति सुखगमनेन देवदेवः
स वनमुपेत्य ददर्श तापसं तम् ।
स्फुटमिदमवदच्च केन हिंसा—
परमिदमुद्धरसि त्वमल्पमेधः ॥ ८१ ॥

वत्र यदमवधीय तस्य कोपा—
दयददभिज्वलितश्चिरन्तनारिः ।
अनुचितमिदमाह कस्त्वदन्यो
मुनिषु निरंतरसंयदुन्मदिष्णुः ॥ ८२ ॥

प्रहसितवदनांबुजस्तदुक्त्या
भुवनगुरुर्भगवांस्तु तत्प्रतीत्यै ।
अदलयदनलार्धदग्धमेधः
परिदृढमुष्टिपरश्वधं न तेन ॥ ८३ ॥

परिणमदनलोष्मपाकजात—
श्रमभरितं भुजगं प्रियाममेतम् ।
जिनवरमविवदयन् स्वधाम्ना
नागममपास्य तताप तापसस्य ॥ ८४ ॥

प्रणिहितमनसो गुरुस्तवेषु
व्यथितनमो भुजगो विपत्तिकाले ।
अपि लघुगणनेषु देवदेवो
न हि कुरुते स कृती कदाप्यवज्ञाम् ॥८५॥

परिगतदहनं व्युदस्य देहं
भुजगपतिर्भवने बभूव देवः ।
समजनि भुजगी च तस्य देवी—
वहलत्कोमलनीलनीरजाक्षी ॥ ८६ ॥

पद्मावती च धरणश्च कृतोपकारं
तत्कालजातमवधिं प्रणिधाय बुद्ध्वा ।
आनम्रमौलिरुचिरच्छविचर्चितांघ्रि—
मानर्चतुः सुरतरुप्रसवैर्जिनेंद्रम् ॥८७॥

लक्ष्मीधाम श्रीजिनधर्मादपि बाह्यः
कायक्लेशादायुरपाये स तपस्वी ।
देवो जातः ख्यातिमयासीदपि नाम्ना
भूतानंदो भुवनदेवेष्वसुरेषु ॥८८॥

श्रीमानूर्जितशासनो जिनविभुः श्रीवारणस्यां वसन्
तत्तद्भासितसर्ववस्तुविसरत् स्फारावबोधद्युतिः ।
नागेंद्राद्युपनीतनित्यविलसद्भोगोपभोगावहो
देवः सम्प्रजयोश्चकार सुचिरं पित्रोस्स नेत्रोत्सवम् ॥८९॥

इति श्रीवादिराजसूरिविरचिते श्रीपार्श्वजिनेश्वरचरिते
महाकाव्ये कुमारचरितव्यावर्णनं नाम
दशमः सर्गः ।

# एकादशः सर्गः ।

श्रीरूपयौवनैर्धन्याः कन्याः सर्वे महीभृतः ।
वाराणसीमुपानैषुर्दारं तस्मै जिगीषवे ॥ १ ॥

विवाहमंगलेऽवश्यं विश्वसेने कुतूहले ।
कुमारांतिकमागत्य ज्ञात्वावसरमब्रवीत् ॥ २ ॥

विशुद्धज्ञानदेहस्य तव किं नाम कथ्यते ।
किं नु वाचालयत्यस्मानन्वयस्नेहसंभ्रमः ॥ ३ ॥

नित्यमानंदरूपस्त्वदथ्वानंदन चात्मनः ।
बहिर्भोगोचिते वस्तुविस्तरे कस्तवादरः ॥ ४ ॥

अतिसर्व्वस्य धाम्नाशे किमेते पितरो वयम् ।
अथवा मणयः किं न पाषाणादुत्पतिष्णवः ॥ ५ ॥

त्वयैव कुलमस्माकं दीपितं किमिह श्रुतम् ।
प्रदीपं जीवलोकानां त्वमेव प्रविदुर्बुधाः ॥ ६ ॥

अनुमत्या तथापीदं राजकं प्रतिमान्यताम् ।
कन्यारत्नपदाभिस्त्वामाराधयतुमागतम् ॥ ७ ॥

भोगार्थमपि तद्वाक्यं तस्य वैराग्यमादधौ ।
मुखमिष्टार्थसंसिद्धौ किं हि न स्यात्कृतात्मनाम् ॥ ८ ॥

भावानुबंधिनो भोगान्वशिनस्तस्य जानतः ।
इति संसाराधिकारी वितर्कोऽजनि कर्कशः ॥ ९ ॥

यद्योजयति भोगांगे जानन्नपि जनो मनः ।
अतः कूपनिपातोऽयं दीपहस्तस्य देहिन ॥ १० ॥

वैराग्यं विषये पुंसां विवेकस्य हि सत्फलम् ।
कालकूटं किमश्नीयादनमिज इवे ततः ॥ ११ ॥

अदूरक्षेमदा नूनं प्राप्य मार्गमनर्गलम्।
प्रत्यावर्तितको नाम प्रबुद्धः शुद्धदर्शनः ॥ १२ ॥

दोषदृष्ट्या यदि त्याज्यो विषयस्तद्ग्रहेण किं ?।
प्रक्षालनाद्धि पंकस्य दूरादस्पर्शनं वरम् ॥ १३ ॥

पित्रे निवेदयन्नेवमिदमेव तदागतैः।
देवैर्लोकांतिकैरूचे दिवः प्रणतमौलिभिः ॥ १४ ॥

प्रसीद मदनाराते प्रसीद ज्ञानदीधिते।
प्रसीद जगदीशान प्रसीद परमेश्वर ॥ १५ ॥

आजवंजवनिर्वेदस्तव सार्थोदपादि यः।
उत्तरक्रियया देव कृतार्थः क्रियतामयम् ॥ १६ ॥

अवारवारिदध्वंसं ध्यानोदयगतस्य ते।
ज्ञानभानोस्तमोलुत्यै भव्यलोकः प्रतीक्षते ॥ १७ ॥

मुक्तिवर्त्मनिरुंधाना संति दुर्नयतस्कराः।
श्रेयसे जगतां तेषु त्वत्प्रभावः प्रभाव्यताम् ॥ १८ ॥

तान्प्रत्याहस्म देव सनेर्मथे प्रतिश्रमम्।
वरहासभृतत्रस्यं बंधुनैवाननेंदुना ॥ १९ ॥

अवनम्य ततो देवं जग्मुर्देवमहर्षयः।
तदभिप्रायबोधार्थप्रमोदोत्फुल्लचक्षुषः ॥ २० ॥

तुरापाहं पुरो धावतदनु त्रिदिशाधिपाः।
धारणासिमुपासेदुरासनोत्रासबोधिता ॥ २१ ॥

विलंब्य समयं द्वारे दौवारिकनिवेदिताः।
सदो रत्नमयीं देवस्यासीदन्नमृतांधसः ॥ २२ ॥

---

१ आजवजवनिर्वेद. समारवैराग । २ मोक्षमार्गावरणा । ३ तुरापाट्मिद्रम
४ अमृतांधसो देवा अमर्त्या अमृतांधस इति कोश ।

तत्प्रभूमिभूतां मध्ये हेमपीठोपवेशिनम् ।
गारुडश्यामलं मेरुतटकर्मद्रुमोपमम् ॥ २३ ॥

आसन्नस्थगितानेकपद्मरागमणित्विषा ।
निर्वेदभयनिष्क्रांतरागेणेव बहिर्वृतम् ॥ २४ ॥

विनयावनतोर्वीशमुकुटात्तांशुभानुभिः ।
क्षणद्युतिभिरालीढं प्रावृषेण्यमिवांबुदम् ॥ २५ ॥

अनुलेपनमाल्यादींस्तत्क्षणापाहितान् जनैः ।
अवज्ञयैव पश्यंतमंगस्येव पतत्रिणः ॥ २६ ॥

तद्दृष्टिपातमन्वेक्ष्य कुमारममरेश्वराः ।
प्रणमत्स्थदलाघृष्टप्रस्फुरद्दंडभित्तयः ॥ २७ ॥

सर्वामरेंद्रसंमत्या सुत्रामा कामविद्विषे ।
इदं निवेदयामास दुकूलाच्छादिताननः ॥ २८ ॥

अमर्त्यादवतारोऽयं पारार्थैकफलस्तव ।
किं पुनस्त्रिदिवादन्यभोगातिशयहेतवः ॥ २९ ॥

निर्वेदस्तेन देवायं फलेन प्रतिमान्यताम् ।
उन्मील्यं त्वां त्वया चेतः सतामांतरदृष्टयः ॥ ३० ॥

इत्येवं ब्रुवतस्तस्य संभ्रमेणोपधाविनम् ।
आलंब्य हस्तमुत्तस्थौ प्रभुरास्थानमंडपात् ॥ ३१ ॥

देवदुंदुभयो व्योम्नि गंभीरमभिदध्वनुः ।
वितर्कमाणतत्कर्मपर्यंतस्फाटपाटवाः ॥ ३२ ॥

वीणावेणुरवोन्मिश्रं धाम्यानसुभगोत्सवम् ।
तत्रगानसमंगलं किंनरैर्मधुरं जगे ॥ ३३ ॥

अन्दोपस्थितास्तूर्णमस्तलोठन्मूर्तयः ।
सांशामस्य स्वोर्धमनृत्यन् देवकन्यकाः ॥ ३४ ॥

आकृष्टभ्रमरावृष्टिरपतत्कौसुमी दिवः।
तत्स्वयंवरमालेव निर्मुक्ता निर्वृतिश्रिया ॥ ३५ ॥

विचित्रमणिनिष्ठ्यूतरुचिमेचकितांबरा।
शिबिकाचामरस्थानादुपतस्थे तमीश्वरम् ॥ ३६ ॥

अवहन्नवनीपाला· तया तं पदसप्तकम्।
परं क्रमेण गीर्वाणा· कर्मारिविजयैषिणाम् ॥ ३७ ॥

वियोगेन जगद्भानोर्विभवन्नगरं परः।
शोकांधतमसं छन्नं संकुचन्मुखपंकजम् ॥ ३८ ॥

आससाद सदानंदि पुरंदरपुरस्कृतः।
स्थेयभोगविकत्थानावश्वत्थवनमीश्वरः ॥ ३९ ॥

इंद्रहस्तप्रतिध्वस्तसेनाकलकलध्वने।
असित्वा प्राग्मुखं तत्र स्फुटिकोपलमंडले ॥ ४० ॥

बद्धांजलिर्वभाण प्राग्नमः सिद्धेभ्य इत्यलम्।
निर्लुलुचुः पुनर्केशान् पंचभिर्दृढमुष्टिभिः ॥ ४१ ॥

तत्केशराशिमादाय मघवा क्षीरवारिधौ।
निदधौ सोऽपि बभ्रासे नाकेनापि स चंद्रमाः ॥ ४२ ।

नेता निसर्गरम्याणि मुक्तैर्णायकवद्बभौ।
ममे तु केवलं तेन मुक्तया मणिमालया ॥ ४३ ॥

सहजातत्रिबोधस्य दीक्षानंतरतत्क्षणे।
मनःपर्ययनामापि ब्रह्म प्रादुरभूत्प्रभोः ॥ ४४ ॥

उपोष्य दिवसान् देवः स्फुरन्मरकतच्छविः।
पारणादिवसे प्रापत् गुल्मखेदमकल्मषः ॥ ४५ ॥

राजा धर्मोदयस्तत्र धर्मराजमुपस्थितम्।
प्रत्यग्रहीन्नमन्मौलिशिखरस्खलितांजलि ॥ ४६ ॥

सुरसं पायसं तस्मै प्रतिपाद्य यथाविधि ।
इदं प्रश्रयिता वाचा प्रोवाच पृथिवीपतिम् ॥ ४७ ॥

इतः स्वल्पविशेषो मे देव संसारवारिधिः ।
तत्पुरोपांतवर्तित्वं इष्टया प्राप्तासि यन्मया ॥ ४८ ॥

दूरस्तवोऽपि देवस्य दुःखहायनदेहिनाम्
मंविधानं पुनः किं न भुक्तये मुक्तयेऽपि वा ॥४९॥

अनुगम्य तमीशानं निवृत्य च तदाज्ञया ।
ग्रहमहीक्षिद्दाक्षीदाक्षिताश्चर्यपंचकम् ॥ ५० ॥

पावने तु वने क्वापि स कदाचित्तपोनिधिः ।
प्रतिमायोगमास्थाय तस्थौ स्थाणुरिव स्थिरः ॥ ५१ ॥

मैत्री तस्य प्रभावेन तिरश्चां च व्यनिद्धिपाम् ।
अभूदन्यविजातीनां छिन्नमेषभूतामिव ॥ ५२ ॥

भोगिनो धर्मसंतप्ता शिखंडेन शिखावलेः ।
अन्वगृह्णंत निम्राहाः छायामंडलशालिनाम् ॥ ५३ ॥

पेपतुस्तैः सिंहैर्वाढमाक्रमणक्षमैः ।
वह्लमन्यंत गृह्योऽपि स्निग्धविस्तीर्णदृष्टयः ॥ ५४ ॥

अमृतादेवतासौ तस्य तरुभिस्तं निरूपितैः ।
वसंतवैभवश्चैव रवौ तीव्रेऽपि तत्यजे ॥ ५५ ॥

नित्यं तद्दर्शनानंदवर्द्धितास्तु पतत्रिणः ।
अवापुर्मत्सराविश्रामश्चोनेदेष्वपीडिताः ॥ ५६ ॥

अभवंस्तद्वनस्यातमसत्रो न तथा प्रियाः ।
तदंगस्पर्शनो वातायद्वादानंददेहिनः ॥ ५७ ॥

अस्मिन्नवसरे व्योम्नि भूतानंदस्य गच्छतः ।
मुनिप्रभावसंरुद्धः देवमासीद्विमानकम् ॥ ५८ ॥

निर्भिद्य पृथिवीचक्रं केचित्प्रचुरविग्रहाः ।
उत्पेतुरतिवेगेन पातालक्ष्माधरा इव ॥ ७१ ॥

प्राभवत्प्रक्रिया तस्य चित्तक्षोभाय न प्रभोः ।
तरवर्तिकं विपर्यति स्फुरंत्या मृगतृष्णया ॥७२॥

पुष्पी वृष्टिरभूत्सापि वेरे शास्त्रपरंपरा ।
किं नाम दुष्करं तस्य लोकोत्तरतपस्विनः ॥ ७३ ॥

क्रोधाविष्टमना भूयस्तोयवृष्टिं व्यभावयन् ।
स्थूलधारानिपातेन श्वभ्रीक्षत शिलानलम् ॥ ७४ ॥

जलप्रक्रियया तस्य धैर्यभंगमपश्यताम् ।
विक्षेपात्तेन दावाग्निः कोपवत्प्रचितम्निरे ॥ ७५ ॥

जिनप्रभावाद्दावाग्नौ चंदनद्रवतां गते ।
अहिनो महिला वैरात् दुर्जहार महीधम्म् ॥ ७६ ॥

पापाचारस्य दुश्चेष्टामुद्वीक्ष्य त्वरितक्षुधा ।
पद्मावत्या समं देवमुपतस्थौ फणीश्वरः ॥ ७७ ॥

तस्य विस्तारयामास सधैर्यस्तवपूर्वकम् ।
स्फुरन्मणिरुचिस्फारस्फुटामंडलमंडपम् ॥ ७८ ॥

श्वेतच्छत्रं दधौ देवीमुक्ताधामाभिवेष्टितम् ।
ज्योत्स्नाकलापसंपूर्णं पार्वणेंदुमिवापरम् ॥ ७९ ॥

असमूलोचयश्चेव जिनस्याजय्यतां परैः ।
चक्रे तस्योरगो रक्षामीदृक्षा हि कृतज्ञता ॥ ८० ॥

कोलाहलोत्तरं तेन निर्मुक्ताधिरवैरिणा ।
अपतन् पर्वता नस्मिन् निरीरायङ्म्नानयः ॥ ८१ ॥

अनुबध्य पनङ्गरिपर्वतध्यानभीरवः ।
न केवलं मृगाधिदाहिनेशुर्वनदेवताः ॥ ८२ ॥

फणामणिशिलाघाताच्चूर्णितो जलदद्रुयः ।
बभ्रिरे भुजगेंद्रस्य श्वासधूमोद्गमश्रियम् ॥ ८३ ॥

एकत्ववितर्कवीचारध्यानवह्निप्रभावतः ।
घातिकर्मवनं सर्वमदोषविजिगीषणा ॥ ८४ ॥

आविर्बभूव देवस्य तत्क्षणादेव केवलम् ।
परं ज्योतिरनाभासं सर्वतो भासनक्षमम् ॥ ८५ ॥

ततः प्रघोषं जयकारतूर्यै—
र्दिवौकसां उल्लसितं समंतात् ।
निशम्य निर्मुच्य तुषं तदैव
बभूव शत्रुः स च कांदिशीकः ॥ ८६ ॥

अनन्यशरणास्तदा प्रभुमुपेत्य बद्धांजलि—
र्जिनेंद्र जगतांपते जय जयाभिरक्षेति माम् ।
ननाम मुकुटोल्लसन्मणिमिषल्लिख—
न्नुर्वरां जगत्त्रयगुरुं रिपुविपुलबोधलक्ष्मीनिधिम् ॥८७॥

देवाः सर्वचतुर्निकायपतयः संभूय सद्भूतयो
भक्तिप्रौढमवाढबद्धमतयो गाढोपगूढश्रियः ।
श्रोत्रश्रोत्तरस.यनस्तनुभृतां नृत्यैश्च नेत्रप्रियै—
श्चक्रुस्तस्य सभाजनाभजनया लोकैकशांतिप्रदम् ॥८८॥

इति श्रीवादिराजसूरिविरचिते श्रीपार्श्वजिनेश्वरचरिते
महाकाव्ये केवलज्ञान प्रादुर्भावो नाम
एकादश. सर्ग

---

# द्वादशः सर्गः ।



शक्रस्तदा जिनमहक्रमतत्त्ववेदी
स्वादिष्टवास्तुशकलेन धनेश्वरेण ।
श्रीमानवीकरणदन्यसमव्यवस्था—
मास्थायकां जिनरवेर्जगदीश्वरस्य ॥ १ ॥

तत्राभवन्मणिमयी सकला धरित्री
चित्रोल्लसत्किरणकंटकितप्रदेशा ।
मुग्धास्तु दिव्यवनिताः प्रविलोकयंत्यो
यां तर्कयंति चितनां कुरुतेंद्रचापाम् ॥ २ ॥

माणिक्यगोपुरचतुर्मुखनिर्गमैश्च
प्राकारभित्तिवलयैः कनकत्रिभेदः ।
आवेष्टितं जिनपुरं तदलं बभासे ।
रत्नत्रयप्रतिनिभैः कुदृशो निषेद्धुम् ॥ ३ ॥

ख्याता जलेन परमावधिपावनेन
गाधितरप्रकृतिना परिधिः परीये ।
उत्फुल्लहेमकमलेषु वधूसमेतां
क्रीडंति यत्र मुदिताः कलहंसभव्याः ॥ ४ ॥

आस्वादरम्यरसनिर्भरसत्फलौघैः
कल्पद्रुमैरुपवनानि चिरं विरेजुः ।
यत्राभवन्नमरसौख्यमिवाप्नुवंत—
श्छायागताः झपदि मध्यमजीवलोकाः ॥ ५ ॥

सोपानवद्धविमलस्फटिकायतानां
स्वच्छां विभाग्महिताश्च महाम्बरस्य ।

चार्द बभूवुरसुरेंद्रभुजप्रभाव—
प्रोत्पादिताद्रिकधराविवरोपमेयाः ॥ ६ ॥
स्तूपाः पयोधरपथस्फटिका च वद्धाः
कूटाग्रकोटिदलितभ्रमदभ्रकूटाः।
भव्यैकदृश्यवपुषो नितरामभव्या
मार्गे गते स्खलनकालितया विबभुः ॥ ७ ॥
आकंपमानमणिवद्धमहापताका
स्तंभाश्च तुंगशिखरस्थितहेमयक्ष्याः।
आधूनयन्निव जयोन्नतिसंविभागा
देवस्य तूर्णमभिमानरजांसि पुंसाम् ॥ ८ ॥
नृत्यन्निलिंपवनिता रुचिदीप्तिगर्भा
वाद्यस्वनैर्मरकताकृतिनाट्यशालाः।
सौदामिनीगुणलताकलितोदराणां
लीलां दधुर्ध्वनितकालवलाहकानाम् ॥ ९ ॥
अंतस्थकिंनरकलध्वनिदत्तशब्दे—
रद्दामहोमशिखराः कृतकाद्रिमुख्याः।
स्फारैर्गुहामुखिमुखैर्जगुरात्सयेव
देवस्य कर्मविजयं जगदेकजिष्णोः ॥ १० ॥
मध्येपुरं परमवस्तुनिवद्धभीति—
रभ्रंलिहस्फुरितरत्नसहस्रकूटा।
पर्ष्ठामिव प्रकटयत्यथ मेरुसृष्टिं
त्वष्ट्रा स्वयं विरचिता वसतिर्बभूव ॥ ११ ॥
कंठीरवो धृतहरन्मणिवज्रपीठे
प्राच्याद्रिकूट इव दीप्तमयैकमूर्तिः।
आनम्रमौलिशिरोरदेहशो समंता—
देवस्तमोगह इव त्रिदिवादिनाथैः ॥ १२ ॥

आत्मास्ति तावदुपयोगनिवर्तमूर्तिः
कायावधीश्च निजवेदननिश्चितोऽसौ ।
अर्थांतरं च पृथुमीप्रभृतेस्तमाहु—
र्भिन्नप्रमाणविषयत्वनियामसिद्धेः ॥ २६ ॥

तस्मिन् प्रपादिनि करस्य भवंति केचि—
दुक्तस्थितेरितरथेतरथा विकल्पाः ।
तेनर्थयो च लघुतूलवदुत्प्रवंते
प्रत्यक्षमा न पवनप्रतिहन्यमानाः ॥ २७ ॥

नानाविधास्तव विवर्तवशादनादि—
र्बंधस्तमावसति कर्मपरंपरायाः ।
येनाजवंजवमहार्णवमध्यवर्ती
दुःखं पारभ्रमति दूरमतीरदर्शि ॥ २८ ॥

तस्यास्य संसृतिनिदाननिरुद्धवृत्ति—
रत्नत्रयाद्भवति मुक्तिरुदारयुक्तिः ।
दोषप्रकोपशमनक्षमयोरसिद्धौ
प्रध्वंसनं हि सुपरिस्फुटमामयानाम् ॥ २९ ॥

जीवादिवस्तुविषयाभिरुचिस्तु दृष्टि—
र्विज्ञानशुद्धि वशसंयमवृद्धिहेतुः ।
उज्झंति तापमुपपद्य यया नियोगात्
संतो नितांतममृतांबुधिवेलयेव ॥ ३० ॥

नैसर्गिकी निरपदेशपुरस्सराधा
वस्तुस्थितेरधिगमाद्भवती द्वितीया ।
वेधस्समस्तधिगमोऽपि नयप्रमाणे—
र्निर्धूतबाधकनयप्रसरप्ररूढः ॥ ३१ ॥

स्थानत्रयेऽपि जिनशासनमानदंड—
निर्भक्तिसीमनि विशुद्धविशेष्ययोगात् ।

निस्संगसारकथयैत्र सुखं प्रयच्छन्
भव्यान् कृतार्थयसि दिव्यनिकामसेव्यः

त्वामव्यय सकलवत्सल सप्रभावं
चित्ते करोमि वरमंत्रपदैस्तवीमि ।

क्लेशार्णवप्रभवदुःसहदुःखपंकात्
मामुद्धरिष्यति हि धर्मविनोद एव ॥

आस्थां गुणस्तवकृतो तव देव दक्षा
श्रेयो लभंत यतिकांतगुणार्णवस्य ।

तुभ्यं नमोस्तु वरदेव प्रवक्तुकामा
सम्यक्त्वतुंगमहिमानमुपाश्रयंति ॥ ६०

स्वाधीनबोधमयनिर्मलदर्पणात—
बिंबागतत्रिविधकालजगत्त्रयाय ।

भव्यांबुजाकरविबोधनतत्पराय
श्रीपार्श्वनाथभगवन् भवते

त्रिभुवनगुरुमेवं सिद्धिलक्ष्मीसमेतं

सविनयमभितुष्य स्वर्गिणामग्रगण्या

श्रीनिर्वाणनवोदयाद्रिशिखरप्रव्यक्तबोधस्तुति—
स्वर्गी प्राग्रहरोपि नीतविनयप्रोद्दामपुण्याजा

भव्यांभोजविकाशवैभवकरो देयात्स व श्रेयसि
देवो दीर्घमुपातिमो जिनरविः

इति श्रीवादिराजसूरिविरचिते श्री
महाकाव्ये भगवन्निर्वाणगमन
द्वादश सर्ग ।

निष्पन्नोऽयं नवरसमुधास्यंदसिंधुप्रबंधो
जीयादुच्चैर्जिनपतिभवप्रक्रमैकांतपुण्यः ॥ ६ ॥

अन्यश्रीजिनदेवजन्मविभवव्यावर्णनाहारिणः
श्रोता यः प्रसरत्प्रमोदसुभगो व्याख्यानकारी च यः ।
सोऽयं मुक्तिवधूनिसर्गसुभगो जायेत किं चेकश-
स्सगात्तिऽप्युपयाति वाङ्मयलसल्लक्ष्मीपदश्रीपदम् ॥ ७ ॥

इति प्रशस्तिः ।

5498



समाप्तमिदं पार्श्वनाथचरितम् ।

